With the best regards of the
Editor

*From the Journal of the Bihar and Orissa Research Society,*
*Vol XVII, 1931, Parts II-III*

# Mīmāṁsā-Śāstra-Sarvasva

**By Halāyudha. Edited by Umesa Misra, M A.**

हलायुधकृते

# मीमांसाशास्त्रसर्वस्वे

प्रथमाध्याये प्रथमः पादः ।



## १ धर्मशास्त्रारम्भप्रतिज्ञाधिकरणम् ।

ॐ नमो गणेशाय ॥ इह खलु साङ्गवेदाध्ययनानन्तरं विचार-कर्त्तव्यतार्थं गुरुगृहवासावसाननिवृत्तिं प्रतिपादयितुं जैमिनिना आद्यसूत्रं प्रणीतम् । तत्र 'स्वाध्यायोऽध्येतव्य' इत्यनेन विहिताया भावनाया भाव्याकाङ्क्षायां किं विश्वजिन्न्यायात् स्वर्गः फलं उताक्षरादिग्रहणद्वारा वाक्यार्थज्ञानमिति सन्देहः ।

तत्र यद्यप्यर्थज्ञानं दृष्ट[1]मुत्तरकर्मानुष्ठानोपयोगि च तथा-ऽप्यध्ययनस्य त[2]त्साधनत्वं मानान्तरसिद्धमिति स्वर्गाद्यर्थतैवाध्ययनस्य युक्ता न चावघातादिवन्नियमविधिः[3] । नियमो[4] हि न ज्ञानस्वरूपे प्रमाणान्तरविरोधात् नापि क्रत्वपूर्वे । अनारभ्य विहितस्याध्ययनस्य श्रुत्याद्यभावेन क्रत्वनङ्गत्वात् । अवघातादीनां तु क्रत्वङ्गतया तत्साधनरूपे नियमो युक्तः । एवञ्च स्वर्गार्थाध्ययनात् न शब्द-महिम्ना जायमानमपि ज्ञानं उपयुक्तमिति कदाचिद्विचारे सम्भवत्यपि अध्ययनानन्तरमवश्यकर्त्तव्यता तस्येति पूर्वपक्षः ।

---

१ दृष्टफलमित्यर्थः ।

२ वाक्यार्थज्ञानम् ।

३ अध्ययनस्येति शेष । यथा तण्डुलनिष्पत्तौ अवघातस्य नियमस्तथाऽर्थज्ञाने-ऽध्ययनस्य नियमविधिरस्तीति भाव' ।

४ न हि ज्ञानस्वरूपे नियम सम्भवति तस्य स्वत' सिद्धत्वात् इत्याह—नियमो हीति ।

सिद्धान्तस्तु—दृष्टेऽप्यर्थज्ञानेऽध्ययनं नियम्यते। ज्ञानस्य हि उत्तरकर्मानुष्ठानाङ्गत्वे सामर्थ्यात् सिद्धे तदुद्देशेन[1] चाध्ययने विहिते तेनैव निराकाङ्क्षैरुत्तरक्रतुविधिभिरुपायान्तरानाक्षेपे अध्ययन-जन्यज्ञाननियमस्यापशूद्राधिकरणे वक्ष्यमाणस्याध्ययनविधिप्रसाद-लभ्यतया विधेः साफल्यात्। तेनार्थज्ञानावसानमध्ययनविधिना विधीयत इति विचारं विना तदनुपपत्तेः। अध्ययनविधिरेव विचार-माक्षिपंस्तद्विरुद्धमधीत्य स्नायादिति स्मार्त्तस्नानं बाधत इति[2]।

एवञ्च वेदाध्ययनानन्तरं यतोऽध्ययनमर्थज्ञानार्थमतो हेतोस्तदुप-योगिविचारफलिका धर्मजिज्ञासा कर्त्तव्येति—

## अथातो धर्मजिज्ञासा ॥ १ ॥

प्रथमसूत्रार्थः। धर्मग्रहणमुपलक्षणम्। अधर्मस्यापि हानाय जिज्ञास्यत्वात्। जिज्ञासा च चतुर्धा—धर्मस्वरूपप्रमाणसाधन-फलविषयत्वात्।

## २ धर्मलक्षणाधिकरणम्।

तत्र को धर्मः कथं लक्षणक इत्येवं जिज्ञासाविषयीकृतयोर्धर्म-स्वरूपविशेषप्रमाणयोर्निरूपणाय द्वितीयं सूत्रम्—

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

यद्यपि[3]गोदोहनादिद्रव्यं यागादिक्रिया नीचैस्त्वादि[4]गुणश्च फलसाधनत्वात् धर्मशब्देनोच्यते न त्वपूर्वादय इति श्रेयस्करभाष्ये

---

१ अर्थोद्देशेन।

२ अत्रानुरूपा' पङ्क्तयः शास्त्रदीपिकायां (पृ० ७ निर्णयसागरसंस्करणे) द्रष्टव्या'।

३ अत्राप्यनुरूपा पङ्क्तय' शास्त्रदीपिकायां (पृ० १७) द्रष्टव्या'।

४ अनुदण्डादि।

स्थितं तथापि तेषां[1] फलसाधनत्वेन रूपेण न प्रत्यक्षादिविषयत्वं किन्तु चोदनैव तत्र प्रमाणमित्यर्थः । उक्तञ्च वार्त्तिके[2]—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥

अथ प्रामाण्यविचारः ।

प्रामाण्यं तु स्वत एव, अप्रामाण्यं तु परतः । अपौरुषेये च वेदे भ्रमप्रमादाद्यप्रामाण्यप्रयोजकं नास्त्येव । तत्र श्येनादौ लोके धर्मव्यवहारदर्शनाद्वेदबोधितं अनिष्टाननुबंधीष्टसाधनमेव धर्मः । व्यवहारानादरेण वाच्यलाघवे तु वेदबोधितेष्टसाधनमात्रम् । उक्तञ्च—

यदि येनेष्टसिद्धिः स्यादनिष्टाननुबन्धिना ।
तस्य धर्मत्वमिष्येत ततः श्येनादिवर्जनम् ॥
यदा तु चोदनागम्यः कार्य्याकार्य्यानपेक्षया ।
धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेऽपि धर्मता ॥ इति ॥

## ३ धर्मप्रमाणपरीक्षाधिकरणम् ।

## तस्य निमित्तं परीष्टिः ॥ ३ ॥

तस्य धर्मस्य निमित्तं प्रमाणं चोदना तस्याः परीष्टिः परीक्षणमस्मिन् पादे क्रियते इत्यर्थः । इषुगताविल्यस्मात् 'इषेरनिच्छार्थस्य'[3] इति नित्ये युचि प्राप्ते 'परेर्वे'ति[4] विकल्पात् पक्षे क्तिन् ।

---

१ द्रव्यादीनामित्यर्थः ।
२ श्लोकवार्त्तिके, चोदनासूत्रम्, कारिका १३-१४ ।
३ ण्यासश्रन्थो युच् ३-३-१०७ इति पाणिनीयसूत्रस्य वार्त्तिक, सङ्ख्या २२२३ ।
४ पाणिनीयसूत्रवार्त्तिक, स० २२२४ ।

## ४ धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम् ।

**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्ष-मनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥**

चोदनैवेत्यस्यार्थस्य साधनाय प्रत्यक्षादीनामनिमित्तत्वमुच्यते । इन्द्रियाणां विद्यमानार्थसन्निकर्षे सति प्रत्यक्षमुत्पद्यते । असन्निकृष्टानां जनकत्वे पक्षे त्वार्जवावस्थानमेव संप्रयोगशब्दार्थः । तथा च वार्त्तिकम्[१]—

सम्यगर्थे च संशब्दो दुष्प्रयोग[२]निवारणः ।
प्रयोग इन्द्रियाणाञ्च व्यापारोऽर्थेषु कथ्यते ॥
यदि वार्थार्जवे स्थानं संप्रयोगोऽत्र वर्ण्यते ।
संख्यादीन् वा विनिर्जित्य प्राप्ति[३]पक्षोऽत्र दूष्यताम् ।

तच्च[४] भाविस्वर्गजनकत्वे न प्रमाणं वर्त्तमानार्थग्राहित्वादित्यर्थः । इन्द्रियाणि तु घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोभेदात् षट् । श्रोत्रं तु कर्णशष्कुल्यवच्छिन्ना दिक् "दिशः श्रोत्र"मिति दर्शनात् । मनस्तु पृथिव्यादीनामेवान्यतमात्मकं तेभ्योऽन्यद्वा ? सर्वथा तावदस्ति मनः । तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्त्तते न बाह्येषु रूपादिष्वित्यर्थान्तर-मित्युच्यते । तच्च[५] चक्षुरादिभिरपि घटादौ ग्राह्ये सहकारि अन्य-मनस्केन रूपाद्यनुपलब्धेः । इन्द्रियजज्ञानञ्चापरोक्षम् । ज्ञानजन्यो हि विषयगतः फलविशेषोऽयम् । अपरोक्षं नाम सर्वस्य संवेद्यः । यद्भावाभावाभ्यां लिङ्गाभ्यां पश्यामि न पश्यामीतिव्यवहारः ।

---

१ श्लोकवा० प्रत्यक्षसूत्र का० ३८, ४३ ।
२ आदर्शपुस्तके 'दुष्प्रयोग' इति पाठ ।
३ मुद्रितपुस्तके 'प्राप्त' इति पाठ ।
४ प्रत्यक्षम् ।
५ मन ।

अपरोक्षञ्च द्विविधम्—अविविक्तसामान्यविशेषविभागं सम्मुग्धवस्तुमात्रगोचरमालोचनात्मकमेकम्, सविकल्पकञ्चापरम्। प्रत्यभिज्ञा तु स्मृत्यनुभवरूपम्। तदुक्तं वार्त्तिके[1]—

विविक्ता एव तेऽर्था हि[2] स्मृतिप्रत्यक्षगोचराः।

'एकमेव ज्ञानं संस्कारेन्द्रियाभ्यां जायमानमंशे स्मरणमंशान्तरे प्रत्यक्षमिति' तद्व्याख्यायां न्यायरत्नाकरः[3]।

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्॥ ५॥**

प्रत्यक्षादीनां धर्मे प्रामाण्यनिरासेन चोदनैवेत्यवधारणस्य सिद्धौ चोदना प्रमाणमेवेत्यस्य साधनार्थमिदं सूत्रम्। अस्यार्थः—औत्पत्तिकोऽनित्यः शब्दार्थसम्बन्धः तस्य धर्मस्य निमित्तं पूर्वसूत्रे समासान्तर्गतो निमित्तशब्द इहानुषज्यते। तथा च सम्बन्धकर्तृनिमित्तदोषशङ्का नास्तीति भावः। कथं धर्मे प्रमाणमित्यपेक्षायां उपदेशो विधिर्ज्ञानं ज्ञापको यत्र इत्युक्तम्। न च तत्र बाधकप्रत्यय इत्याह—अव्यतिरेकश्चेति। अनपेक्षत्वात् प्रमाणान्तरसम्बादानपेक्षत्वात्। आह च—

उपदेशो हि भवति ज्ञानं तस्येति योज्यते।
ज्ञायतेऽनेन तज्ज्ञानमेकाधिकरणत्वतः॥

---

१ श्लोकवार्त्तिक, प्रत्यक्षसूत्रे २३० कारिका।

२ तेऽर्थाहीत्यस्य स्थाने तेऽप्यर्था इति मुद्रितपुस्तकपाठ।

३ (क) प्रत्यक्षसूत्रे २३० कारिकाव्याख्याने।

(ख) जायमानमित्यत पर 'शब्दतत्सम्बन्धयो स्मरण, अर्थरूपे त्विन्द्रियसन्निकृष्टे प्रत्यक्ष'मिति पाठो मुद्रितपुस्तके।

औत्पत्तिकगिरा दोषः कारणस्य हि वार्यते ।
अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥
सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः[१] ॥

उपवर्षस्तु 'तस्य निमित्तं परीष्टि'रित्येवमादिसूत्रत्रयमष्टधा कृत्वा व्याचक्षाणः प्रत्यक्षादिप्रमाणानां धर्मे असामर्थ्यं वदन् प्रसङ्गात् प्रमाणाभासानपि व्युत्पादयामास । तत्र हेतुदोषास्त्रयः— असिद्धिरनैकान्तिको बाधश्चेति । असिद्धिः पञ्चधा—स्वरूपासिद्धिः, सम्बन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्यसिद्धिश्चेति । सर्वज्ञत्वखपुष्पादिः स्वरूपासिद्धिः । पक्षधर्मताविकलो द्वितीयः । पक्षमात्रवृत्तिर्धर्मिव्यतिरेकेणान्यत्रासत्वाद्व्यतिरेकासिद्धिरित्युच्यते । स्पष्टौ द्वौ । अनैकान्तिको द्विविधः—सव्यभिचारः, सप्रतिसाधनश्च । शब्दव्युत्पादनप्रसङ्गेन च वर्णानां वाचकता वाच्यस्य च गोत्वादि-सामान्यस्य साधनं तस्य व्यक्त्या सह भेदाभेदौ अवयवावयविनोर्गुण-गुणिनोश्चेत्यादिप्रपञ्चितम् । गुणेष्वयं विशेषः । घटः पटेन संयुक्तो न तु घटेनेति प्रतीतेर्घटनिष्ठः संयोगः पटनिष्ठाद्भिन्नः पट-प्रतियोगिकश्च । परमते अन्योन्याभाववत् । रूपादयोऽपि कारण-गुणप्रक्रमेणावयविन्युत्पद्यन्त इति वैशेषिकादिप्रक्रिया नाभ्युपगम्यते रूपद्वयाप्रतीतेः । गुरुत्वाद्याधिक्याभावाच्च । अवयवनिष्ठमेव रूपं तत्तादात्म्यापन्नेऽवयविन्यपि वर्त्तते । अत एव नानारूपसमाहार-श्चित्रम् । एतेन संयोगजसंयोगोऽपि निरस्तः । कर्म तु संयोग-विभागपरं परातिरेकेण नास्तीति यद्यपि भाष्यस्वरसस्तथापि

१ श्लोकवार्त्तिक, सू० ५ कारिका ६—११ ।

तदसमवायिकारणतया विप्रतिपन्नं प्रत्यनुमेयम् । वस्तुतः प्रत्यक्षमेव । भाष्यन्त्वन्यार्थकमिति वार्त्तिककाराः ।

आत्मा चानन्दरूपः, 'आनन्दं ब्रह्मेति' श्रुतेः । स च संसारेणाभिभूतत्वादिदानीं नोपलभ्यते । मुक्तस्य तु बाह्येन्द्रियनिवृत्तावपि मनसोऽनुवृत्तेर्मानसप्रत्यक्षेण परमानन्दानुभवः । आह च—

निजं यत्त्वात्मचैतन्यं आनन्दश्चेष्यते हि यः ।
यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥

यद्वा दुःखोच्छित्तिरेव मोक्षः । तथा च वार्त्तिकम्[१]—

तस्मात्कर्मक्षयादेव हेत्वभावे न मुच्यते ।
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥

दिक् तु स्वरूपेण यद्यपि न प्रत्यक्षा तथाऽपि शब्दविशेषणतया श्रोत्रग्राह्या, प्राच्यां शब्द इत्यनुभवात् ।

कालोऽपि घटादिविशेषणतया षडिन्द्रियवेद्यः ।
ध्वनयश्च वायुगुणाः संयुक्ततादात्म्येन श्रोत्रग्राह्याः ।

वर्णास्तु नित्यविभवोऽपि संयोगेन श्रोत्रग्राह्याः । आनुपूर्वी तु ध्वन्यौपाधिका । उक्तञ्च—

त[२]द्वशेन च वर्णानां व्याप्तित्वेऽपि क्रमग्रहः ।
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थितान् ॥
वर्णा अनुपतन्तः स्युरर्थभेदावबोधकाः[३] ॥

एवञ्च क्रमरूपविशेषणानित्यत्वेऽपि वेदः प्रवाहनित्य एव । यद्यपि वर्णानां प्रवाहनित्यतयापि सम्बन्धनित्यत्वोपपत्तिस्तथापि वस्तुगतिमनुरुध्य कूटस्थत्वव्युत्पादनम् । आह च—

---

१ श्लोकवा० सू० ५, का० १०६-१०७ । २ ध्वनि ।
३ श्लोकवा० अधिकरण ६ कारिका ३००—३०१ ।

व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।
वर्णेषु जैमिनेः पक्षस्तथापि न विरोत्स्यते[1] ॥

तस्माच्छब्दार्थयोर्नित्यत्वे तत्सम्बन्धोऽपि नित्यः । स च तत्तदर्थ-ज्ञानानुकूलशक्तिरूपः । अन्त्यो वर्णो वाचक इति भाष्याच्चरम-वर्णनिष्ठः । वार्त्तिकमते तु सर्ववर्णनिष्ठः । आह च—

अन्त्यवर्णेऽपि विज्ञाते सर्व[2]संस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते[3] ॥
तदारूढास्ततो वर्णा न दूरेऽर्थावबोधनात्[4] ।
तस्मात्पदतदर्थसम्बन्धाय न पुरुषापेक्षेति स्थितम् ।

## उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥

वाक्यार्थरूपे धर्मे पुरुषसंकेतापेक्षायां सापेक्षत्वादप्रामाण्यम् । तदनपेक्षायां तु वाक्यार्थबोध एव न सम्भवतीति निर्मूलो धर्म इति प्राप्ते केचिदाहुः—

वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते ।
उपलक्षणतश्चास्य सम्बन्धग्रहणोद्भवः ॥
वाक्यं गोपदयुक्तं यत् तत्सास्नादिमदन्वितम् ।
वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि ॥
सत्यं व्युत्पत्तिरेवं स्यात् तथापि तु न वाक्यतः ।
वाक्यार्थावगतिर्युक्ता तिरोभावेऽपि दर्शनात् ॥
पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते ।
वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम् ॥

---

१ श्लो० वा० सू० ५ स्फोटवाद, कारिका ६३, पृ० ५२९ ।
२ 'पूर्व' इति पाठान्तरम् ।
३ श्लोकवा० स्फोटवाद, सू० ५ का० ११२ ।
४ श्लो० वा० स्फोटवाद, सू० ५ का० ११६ ।

तस्मात्पदोपस्थापितेभ्यः पदार्थेभ्यः एव लक्षणया वाक्यार्थप्रतिपत्तिः । न त्वन्विते शक्तिरिति ।

वेदाँश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥

वेदानां पौरुषेयं, वाक्यत्वात्, भारतादिवत् ।
काठकादिसमाख्यापि नित्यत्वे घटते न हि ॥

तस्मादुत्प्रेक्षामूलकत्वादप्रामाण्यमिति प्राप्ते आह सूत्रकारः—

उक्तन्तु शब्दपूर्वत्वमाख्या प्रवचनात्[1] ॥

अवश्यस्मर्तव्यस्य कर्त्तुरस्मरणादभाव एव निर्णीयते । अन्यथा हि मन्वादिरिव स्मर्येत । किञ्च—

वेदस्याध्ययन सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनता साम्याद्यथेदानीन्तनं तथा[2] ॥

तदिदमाह—

उक्तन्तु शब्दपूर्वत्वमिति ॥ २९ ॥

शब्दः शब्दाध्ययनं काठकादिसमाख्या तु प्रवचननिमित्ता ।

तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणताम् ।
चोदनेतिप्रतिज्ञार्थः पादेनानेन साधिता ॥

चोदनैवेत्यवधारणेन हि प्रत्यक्षादीनामप्रामाण्यं प्रतिज्ञातम् । तत्प्रत्यक्षसूत्रेण साधितम् । औत्पत्तिकस्त्वित्यादिना पादशेषेण तु प्रमाणमेवेत्यंशः साधितः । उत्तरपादत्रयं तु जिज्ञासासूत्रोक्त्या को

---

१ मुद्रितपुस्तके एते द्वे सूत्रे । आख्या प्रवचनादित्यस्य द्वितीयत्वेन पाठ' ।

२ श्लो० वा० अधिकरण ७ कारिका ३६६ । अत्र द्वितीयपादे 'वेदाध्ययनवाच्यत्वादधुनाऽध्ययन यथा' इति मुद्रितपुस्तकपाठ ।

धर्मः किं प्रमाणक इति प्रतिज्ञयैव संगच्छते । न चार्थवादादि-प्रामाण्ये चोदनैवेति प्रतिज्ञाव्याकोपः । चोदनैकवाक्यतया चोदना-मूलतया च प्रमाणीभवतां तेषां प्रत्यक्षादिवत्स्वातन्त्र्यविरहादिति दिक् ॥

इति तर्कपादः ॥

---

## अथ द्वितीयः पादः ।

### १ अकार्यबोधकवाक्यप्रामाण्याधिकरणम् ।

### आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥

वायुर्वै क्षेपिष्ठा देवतेत्यादिर्विषयः । धर्मे प्रमाणमप्रमाणं वेति-संशयः ।

विधिभावनातदंशत्रयाप्रतिपादकत्वान्निराकाङ्क्षतया च विध्येक-वाक्यताविरहान्नैतद्धर्मे प्रमाणम् । तथा हि—

अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात् ।
विध्युद्देशः समाप्यन्ते विशिष्टार्थविधानतः ॥

सिद्धान्तस्तु—विधिना ह्येकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः । स्वाध्यायविधिर्हि फलवदर्थपर्यवसानं कृतस्नस्य वेदस्य बोधयन् प्राशस्त्यपरतया विनाऽर्थवादानां तदनुपपत्तेस्तत्र तात्पर्यं गमयति । विधिरपि पुरुषप्रवृत्तिप्रतिबन्धकीभूतालस्यभङ्गार्थं प्राशस्त्यज्ञानमपेक्षते ततश्चोभयाकाङ्क्षया विध्यर्थवादयोरेकवाक्यत्वात् प्रमाणमर्थवादाः ।

तदुक्तम्—स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते ।

सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता ॥ इति

एवञ्च पूर्वसूत्र एव मन्त्रनामधेययोरप्यप्रामाण्यं पूर्वपक्षीकृत्य स्वाध्यायविधिवशादेवार्थवत्तया भवितव्यमिति साधारण्येन सिद्धान्तयितव्यम् ॥

## २ विधिवन्निगदाधिकरणम् ।

### विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

'औदुम्बरो यूपो भवति ऊर्ग्वा उदुम्बरः ऊर्क्पशवः ऊर्जैवास्या (स्मा) ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै'—इति विषयः ।

किमूर्जोऽवरुध्या इति फलश्रुतार्थवाद इति सन्देहः ।

तत्र तादर्थ्यचतुर्थ्या साध्यत्वं श्रुत्यैव लभ्यते प्राशस्त्यं लक्षणया । न च मुख्यार्थसम्भवे लक्षणा युक्तेति फलविधिरयमिति पूर्वः पक्षः ।

वा--सिद्धान्तस्तु—औदुम्बरताया फले विधीयमानाया अनेनैव वाक्येनाश्रयस्यापि समर्पणे वा भेदः न च दध्नेन्द्रियकामस्येत्यादाविव प्रकरणादाश्रयलाभः । पशुयागो हीह प्रकृतः । स चायोग्यः । फले विधीयमानो हि गुणो यत्र कारकतामापद्यते स आश्रयः यथा होमो दध्नः । न चौदुम्बरता यागे कारकीभवितुं शक्नोति । पशुनियोजनं तु यद्यपि यूपद्वारेण योग्यं तथापि तत्स्वैव यूपेनाप्रकृतम् । न च प्रकृतिवच्छब्देन तत्सन्निधिः । स हि प्राकृतमित्थम्भावं सामान्येन सन्निधापयति । न तत्र यूपस्य स्वरूपेण विपरिवृत्तिः । सामान्यतस्तु जुह्वादीनामप्यस्तीति तेषामप्याश्रयत्वं स्यात् । तथा च यूपग्रहणानर्थक्यम् । तत्र वाक्येनैवाश्रयसम्बन्धे तु वाक्यभेदः । तस्मादौदुम्बरता यूपोद्देशेन विधीयते । ततः स्तुतिरियमूर्जोऽवरुध्या इति ॥

## ३ हेतुवन्निगदाधिकरणम् ।

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

'शूर्पेण जुहोति तेन ह्यन्नं क्रियत' इति विषयः ।

किं शूर्पेण होमे कर्त्तव्ये अन्नकरणता हेतुरुतार्थवाद इति संशयः ।

तत्र हि शब्दश्रुत्या हेतुत्वं गम्यते। लक्षणया तु प्राशस्त्यम्। अत एव च हेतुनिर्देशात् व्याप्तिमन्तरेणानुपपद्यमानात् व्याप्तिवचनं कल्प्यम्—येन येन अन्नं क्रियते तेन तेन होतव्यमिति। तेन व्याप्तिवचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः। शूर्पेण जुहोतीत्यत्र अनुवाद इति प्राप्तेऽभिधीयते—

शूर्पस्य तृतीया श्रुत्या करणत्वं गम्यते। न तदानुमानिकैर्दर्वी-पिठरादिभिर्विकल्पितुमर्हति। न च वेदेनोच्यमानं शूर्पस्य होम-साधनत्वं हेतुमपेक्षते। अर्थवादस्त्वपेक्षितः प्ररोचनार्थम्। एवञ्चा-प्रसिद्धव्याप्तिवचनकल्पनाक्लेशोऽपि न भविष्यति तस्मादर्थवादत्वम्।

## ४ मन्त्रलिङ्गाधिकरणम् ।

## तदर्थशास्त्रात् ॥ ३१ ॥

मन्त्रेष्विदानीं चिन्ता। तेषामानर्थक्यमाशङ्क्य स्वाध्यायविधि-वशेनार्थवत्त्वेत्यवसितमेवाद्याधिकरणे कथितम्। तत्पर्यवसानाये-दानीमर्थविशेषश्चिन्त्यते।

तेषां क्रत्वङ्गत्वं भवेत् किं दृष्टेनैवार्थप्रकाशनद्वारेण किं वोच्चारणमात्रेणादृष्टं कुर्वतामिति संशयः।

तत्र—

यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम्।
प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरम् ॥

उच्यते—

शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः।
नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न दृश्यते[१]

## २ श्रुतिप्राबल्याधिकरणम्।

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्॥ ३॥

स्मृतिप्रामाण्यमुत्सृष्टं प्रसक्तं सर्वगोचरम्।
सति वेदविरुद्धत्वे तदिदानीमपोद्यते[२]॥

प्रत्यक्षश्रुतिविरुद्धाः स्मृतीरुदाहृत्य चिन्त्यते—प्रमाणमप्रमाणम्वेति? तत्र—पूर्वाधिकरणन्यायेन प्रमाणमिति पूर्वपक्षः।

न च प्रत्यक्षश्रुतिविरोधात् स्मार्त्तश्रुतिकल्पना नवक्लृप्तिः। ब्रीह्यादिवदुभयसम्भवात्। तदुक्तम्—

परस्परविरुद्धत्व श्रुतीनां न भवेद्यदि।
स्मृतेः श्रुतिविरुद्धायास्ततो मूलान्तरं भवेद्[३]॥

राद्धान्तस्तु—

स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न संमतम्।
वेदमूलानुमानञ्च प्रत्यक्षेण विरुध्यते[४]॥

यत्तूभयसम्भवादिति तन्न अष्टदोषदुष्टविकल्पापत्तेः। स हि ब्रीहियवयोरगत्यास्वीकृतः।

न हि तत्रैकरूपत्वे चिह्नं किञ्चिद्व्यवस्थितम्।
येनैकत्र प्रमाणत्वं स्यादन्यत्राप्रमाणता[५]॥

१ तन्त्रवार्त्तिक, पृ० ७६।
२ तन्त्रवार्त्तिक, पृ० ८१।
३ तन्त्रवार्त्तिक, पृ० ८४।
४ तन्त्रवार्त्तिक, पृ० ८७।
५ तन्त्रवार्त्तिक, पृ० ९१।

श्रुतिस्मृत्योः पुनः स्पष्टं व्यवस्थाकारणद्वयम् ।
येन श्रुतेः प्रमाणत्वं स्यात्स्मृतेश्चाप्रमाणता[१] ॥

## ३ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ।

## हेतुदर्शनाच्च ॥ ४ ॥

'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति,' 'यूपहस्तिनो दानमाचरन्ति' इत्यादि प्रमाणमप्रमाणं वेति संशये श्रुतिविरोधाभावात् प्रमाणमिति प्राप्ते—

उच्यते—

लोभाख्यस्य हेतोर्दर्शनात् नात्र श्रुतिमूलानुमा ।
उपपन्नतरश्चातद्वद्वाक्यानुमानत ।
दृष्टे हि सत्यदृष्टस्य कल्पना निष्प्रामाणिका[२] ॥

अतः श्रुतिविरुद्धं दृष्टकारणञ्च स्मरणमप्रमाणम् । अन्यत्तु प्रमाणमिति स्थितम् ॥

आचार्यास्तु—अनन्तशाखाप्रभेदभिन्नस्य वेदस्यास्मदादिभिः कार्त्स्न्येनानुपलम्भात् स्मृतिमूलवेदाभावो निश्चेतुमशक्यः ।

तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते ।
यदि वा बाध्यमानत्वमुक्तं बाह्यं स्मृतीः प्रति[३] ॥

एतद्धि जैमिनिना हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते ।

यावदेकं श्रुतौ कर्म स्मृतौ वान्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते[४] ॥

---

१ तन्त्रवार्त्तिक, पृ० ९२ ।

२ तन्त्रवार्त्तिक, पृ० १०४ ।

३ तन्त्रवार्त्तिक, पृ० ११२ ।

४ कारिकेयं शास्त्रदीपिकायामपि ( पृ० २६ ) यथा चाहुरित्यादिना उद्धृता, तन्त्रवार्त्तिक, पृ० ११३ ।

'अणुरपि विशेष'[१] इति न्यायात्।

अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते।

नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता[२] ॥

'यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि सांख्ययोग-पाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थनिर्मितानि धर्मशास्त्राभासानि तेषा-मनेनाप्रामाण्यं, पूर्वोक्तसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम्। मन्वादिवदेव वेदमूलतया प्रामाण्यमिति तु इह निराक्रियते।

सिद्धान्तस्तु—अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या हि मन्वादि-स्मृतिष्वनुपलभ्यमानोऽपि वेदः मूलत्वेन कल्पितः। शाक्यादिष्विद-मत्यन्तविपरीतं अवैदिकमप्रमाणञ्चेत्येव शिष्टानां स्मरणम्। वेद-विद्वेषिण एव च तेषां प्रमाणत्वं मनुते। दृष्टानुसारिणी च कल्पना न तद्वैपरीत्येन। अतोऽत्र वेदकल्पना दवीयसी। अतोऽप्रामाण्यमेव तेषामिति[३]।

## ४ पदार्थप्राबल्याधिकरणम्।

### शिष्टाकोपेऽविरुद्धमिति चेन्न, शास्त्र-परिमाणत्वात्[४] ॥ ५ ॥ ६ ॥

'आचान्तेन कर्त्तव्यं' 'यज्ञोपवीतिना कर्त्तव्य'मित्येवमादीनि क्रत्वार्थाङ्गस्मरणानि प्रमाणमप्रमाणं वेति संशयः।

१ 'अणुरपि विशेषोऽध्यवसायकर' इत्येष न्याय।

२ तन्त्रवार्त्तिक, पृ० ११४।

३ एता पङ्क्तय शास्त्रदीपिकायामुपलभ्यन्ते, पृ० २७ निर्णयसागर।

४ अत्र सूत्रद्वयमेकत्र पठितम्।

तत्र—

श्रुत्युक्तानां क्रमादीनां स्मार्त्तैराचमनादिभिः ।
व्याकोपः स्यात्तस्तावद्विस्पष्टैव विरोधिता ॥
ततः श्रुतिबलीयस्त्वात् स्मृतेः स्यादप्रमाणता ।
पूर्वभाविप्रमाणस्थं प्रमेयस्याद्बलाबलात् ॥
ज्यायस्तेनैव निर्णीते न पश्चादितरादरः ।
नैराकाङ्क्ष्यात् प्रमातॄणामतः स्मृत्यर्थबाधनम्[1] ॥

'वेदं[2] कृत्वा वेदिं[3] करोतीति' क्रमः। कालस्य यः प्रधानेनाङ्गानामविप्रकर्षः प्रयोगप्राशुभावस्य प्रयोगवचनावगतः। यस्य पूर्वाह्णादिः। परिमाणञ्चाविस्मृतसमस्तपदार्थानुष्ठानसिद्ध्यर्थं प्रयोगविधिनैराकाङ्क्षितं पदार्थविधिप्रचयावगतम्। तत्त्रितयमपि क्रम कालपरिमाणात्मकं प्रयोगमध्येऽनुष्ठीयमानैराचमनादिभिरन्यथात्व प्रतिपद्यते। विरोधे च श्रुतिबलीयस्त्वात् स्मार्त्तस्याचमनादेर्बाधः। न च श्रुत्यर्थत्वेऽपि पदार्थगुणत्वात् क्रमादेर्दौर्बल्यम्। पूर्वभाविप्रमाणबलाबलचिन्तयैव निराकाङ्क्षत्वात्। [4]पश्चादवगतं प्रमेयबलाबलस्यानादर्त्तव्यत्वात्। तस्मादाचमनादिस्मृतीनामप्रामाण्यमिति पूर्वपक्षः।

सिद्धान्तस्तु—

पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरविरोधिता ।
विरोधेऽपि च दौर्बल्यं पदार्थेभ्यो गुणत्वतः ॥

---

१ शास्त्रदीपिकायामुद्धृता कारिका ।

२ वेदो नाम दर्भमय सम्मार्जनसाधनम् ।

३ वेदिराहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिरिति माधव ।

४ अत्रापि शास्त्रदीपिकानुरूपा पङ्क्तयो द्रष्टव्या ।

सर्वेषु हि पदार्थेषु प्रबलदुर्बलश्रुतिसमाख्याप्रमाणकेषु प्राप्तेषु प्रयोगवेलायां तद्विशेषणतया क्रम आश्रीयते। तेन स्मार्त्तपदार्थान्तर्भावेणैव तत्तृप्तिः। एवं यावन्तः पदार्था अवधारितास्तेषामेव पूर्वाह्णादिकालसम्बन्धः प्रधानसन्निकर्षः प्रयोगप्राग्भावश्च कल्प्यते। परिमाणन्तु न कस्य चिच्छब्दस्यार्थः। तथात्वेऽपि वा प्रयोज्यपदार्थप्राप्त्यपेक्षत्वात् पाश्चात्यमेवेति न स्मार्त्तानां श्रुतिविरोधः। सत्यपि वा विरोधे क्रमादीनां पदार्थगुणत्वाद्दौर्बल्यम्। आचमनादीनां तु पदार्थत्वात् प्राबल्यम्।

यत्तु प्रमाणबलाबलं पूर्वभावीति तन्न, स्वरूपेण प्रमाणयोरविरोधात् प्रमेयविरोधद्वारको हि प्रमाणविरोधः। तथा च यदैव प्रमेययोर्विरोधो गम्यते तदैव तयोर्बलाबलमपीति तत एव निर्णये जाते नैराकाङ्क्ष्यात् प्रमाणबलाबलमनादर्त्तव्यमिति तस्मादाचमनादिस्मृतीनां अबाधात् प्रामाण्यम्।

आचार्यास्तु—"यज्ञोपवीतादेः प्रत्यक्षश्रुतिविहितत्वेनानुदाहरणत्वान्नेदमधिकरणान्तरं किन्तु पूर्वोक्तशाक्यादिग्रन्थाप्रामाण्यमेवाक्षिप्य समाधीयते। यद्धि तेष्वहिंसादिवचनं श्रुतिस्मृतिविशिष्टं न कोपयति तत्प्रमाणं भवत्विति चेत्—

## न, शास्त्रपरिमाणत्वात् ॥ ६ ॥

न खलु येन केनचित्प्रमितो धर्मः फलं साधयति।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इत्यादिपरिगणितैरेव धर्मप्रमितेर्नियमात्[१]"।

---

१ शास्त्रदीपिका, पृ० ३०।

"यत्तु तृतीयं सूत्रम्–

**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७॥**

तदधिकरणान्तरम्[१]" ।

अत्र वसन्तोत्सवादयः प्रमाणमप्रमाणं वेति संशयः ।

"तत्र स्मृत्यधिकरणे कर्तृसामान्यादाचाराणां स्मृतिवत्प्रतिपादितमपि प्रामाण्यं निर्निबन्धनतया[२]" वसिष्ठविश्वामित्रादीनां महतामपि "व्यतिक्रमदर्शनात्त्वाक्षिप्य समाधीयते ।

यदि वसन्तोत्सवादयोऽष्टकादिवद्वेदमूलकाः स्युस्ततस्तद्वदेव मन्वादिभिर्निबध्येरन्[३]" । तथा वसिष्ठस्य पुत्रशोकार्त्तस्य जलप्रवेशरूपात्मत्यागे विश्वामित्रस्य च चाण्डाल्या जले प्रवृत्तिदर्शनात् कथमर्वाचीनानामाचारे विस्रम्भः । तस्माद्भ्रान्त्यादिमूलत्वात् अप्रमाणमाचार इति पूर्वः पक्षः ।

राद्धान्तस्तु—धर्मबुध्या वैदिकैरनुष्ठानमसति वेदमूलकत्वेऽनुपपन्नम् । व्यतिक्रमस्तु रागद्वेषनिबन्धनो न तु धर्मबुद्धिनिबन्धनः । मन्वादिभिस्तु लाघवार्थं शृङ्गग्राह्किकतया तत्तदाचाराननुपनिबन्धद्भिरपि शिष्टाचारः प्रमाणमिति सामान्यात्मनोपनिबद्धमेव । तस्मात् स्मृतिवदाचाराणामपि धर्मे प्रामाण्यम्[४] ।

## ५ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ।

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्[५] ॥८॥**

'यवमयश्चरुर्भवति,' 'वाराही उपानहौ,' 'वैतसे कटे प्राजा-

---

१ शास्त्रदीपिका, पृ० ३०-३१ ।

२-४ शास्त्रदीपिका, पृ० ३१ ।

५ तेष्वदर्शनाद्विरोधस्येत्येवमुपक्रम वा सूत्रमिति तन्त्रवार्त्तिककारा, पृ० १४५ ।

पत्न्यान् सञ्चिनोती'ति श्रूयते। तत्र यववराहवेतसशब्दाः किं प्रियङ्गुवायसजम्बूनां वाचकाः, किं वा दीर्घशूकसूकरवञ्जुलाना-मिति शिष्टानामेव मिथोऽभिधानविप्रतिपत्तेः सन्देहः।

अविशेषादुभयार्थतेति प्राप्तेऽभिदध्महे—वाक्यशेषाद्दीर्घशूकादय एव वाच्याः। 'यवमतीभिरद्भिर्वौदुम्बर्याः प्रोक्षणे विधीयमाने वाक्यशेषोऽयम्[१]'।

'यत्रान्या ओषधम्लानिः सर्वासामेव मोदनात्[२]'।

एवं वराहवेतसशब्दावपि 'वराहं गावोऽनुधावन्ति,' 'अप्सुजो वेतस' इति वाक्यशेषान्निर्णीयते।

आचार्यास्तु[३]—

"नैवोच्यन्ते क्वचिद्देशे यवश्रुत्या प्रियङ्गवः।
जम्बूं न वेतसं प्राहुर्वराहं नापि वायसम्[४]॥
अध्यारोप्य विचारेण किं मुधा खिद्यते मनः।
सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम्[५]॥
वक्ष्यत्येव न तेनापि पृथक्कार्या विचारणा।
तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम्[६]॥
यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रसिद्धिजा[७]।
तत्र किं तुल्यता युक्ता किमेकैव बलीयसी[८]"॥

---

१ तन्त्रवार्त्तिक, पृ० १४७।

२ 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति श्रूयते, तन्त्रवार्त्तिके—

फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम्।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः॥ पृ० १४८।

३ कुमारिलभट्टाचार्यास्तु।

४-६ तन्त्रवार्त्तिक, पृ० १४८।

७ प्रयोगजेति मूलपुस्तकपाठः।

८ तन्त्रवार्त्तिक, पृ० १४८।

यद्वा यत्र मातुलदुहितृपरिणयनादिषु स्मृत्याचारयोर्विरोधस्तत्र किं तुल्यकक्षत्वमुत स्मृतीनां बलीयस्त्वमिति संशयः।

तत्र—

"यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता।
आचाराणां तथैवेति न विशेषो बलाबले[१]"॥

एवं प्राप्ते ब्रूमः—

"सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना।
तया श्रुत्यनुमानं हि निर्विघ्नमुपलभ्यते[२]॥
आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः।
तेन ह्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते[३]"॥

'प्रत्ययिततरा हि मन्वादयः स्मर्त्तारः। तत्स्मरणं गुणवत्तरकर्त्तृकत्वेनेतरजनचारित्र्यादिस्वभ्भणीयतरम्।

किञ्च आचरितॄणां जनानां स्वयमितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुं सामर्थ्याभावादवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्य्यम्। अतस्त्वाचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति ह्यन्तरितं प्रामाण्यम्।

अपि च कर्मस्वरूपमात्रमाचारेषु प्रत्यक्षम्, कर्त्तव्यता तु सुखादिहेत्वन्तरमालोच्य परिशेषात् कल्प्या। पश्चान्मूलभूतश्रुतिकल्पनम्। स्मृतिषु तु द्रागेव ग्रन्थतः कर्त्तव्यतावगतौ सत्यां मूलमात्रं कल्प्यमिति महानविशेषः। न चात्र विकल्पः। वस्तुनि तद-

१ तन्त्रवार्त्तिक, पृ० १५०।

२ शास्त्रदीपिकायान्तु कारिकायाउत्तरार्धन्त्वित्थं पठ्यते 'तस्मात्तेन बलीयस्त्वमाचारान्निर्निबन्धनात्'। 'उपजायते' इति मूलपुस्तकपाठः।

३ तन्त्रवार्त्तिक, पृ० १५०।

सम्भवात्। न हि मातुलदुहितृपरिणयन प्रत्यवायं जनयति चेति सम्भवति। तस्मात् गृह्यमाणकादिहेत्वन्तरस्याचारस्यैवाप्रामाण्यम् ।

अथ वा[1] ”

“ त्रिवृच्चर्वाश्वबालादेर्लोकेऽन्योर्थः प्रतीयते ।
वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥

यथा त्रिवृच्छब्दस्य लोके त्रिगुणत्वमर्थः त्रिवृद्रज्जुरिति, वेदे तु ‘त्रिवृद्बहिष्पवमान’मित्युक्त्वा त्र्यृचत्रयस्यानुक्रान्तत्वात् स्तोत्रीयानवकमर्थः। चरुशब्दस्यापि लोके स्थाली वाच्या, वेदे त्व‘दित्यः प्रापणीयश्चरु’रित्युक्त्वा ‘अदितिमोदनेने’तिवचनादोदनोर्थः। एव‘माश्वबालः प्रस्तर’ इति लोकप्रसिद्ध्या अश्वजातीयबालमय इति गम्यते। वाक्यशेषात्तु काशमयः। ‘ऐक्ष्व्यौ विधृतौ’ इतीक्षुत्वय-वात्मिके लोकात्। वाक्यशेषात्तु काशमूलके[2] ”।

“तत्र लोकवाक्यशेषयोस्तुल्यबलत्वमुत वाक्यशेषस्था प्रतीतिर्बलीयसीति संशयः।

तत्र—

पदार्थपदसम्बन्धे तुल्यत्वं लोकवेदयोः।
अदृष्टसाधनत्वे हि लोकाद्वेदोऽतिरिच्यते[3] ” ॥
तस्माद्विकल्पेनार्थद्वयं ग्राह्यमिति पूर्वः पक्ष ।

“ सिद्धान्तस्तु—

वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते न हि ।
तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी ॥

१ शास्त्रदीपिका, पृ० ३४ ।
२ तन्त्रवार्त्तिक, पृ० १५२-१५३ , शास्त्रदीपिका, पृ० ३५
३ शास्त्रदीपिका, पृ० ३५ ।

तस्माद्यत्र वाक्यशेषः त्रिवृद्बहिष्पवमानमित्यादिषु तत्र तावत्तदनुगुण एवार्थः समाश्रयणीय इति तावदिह स्थितम्। यत्र तु वाक्यशेषो नास्ति त्रिवृदग्निष्टुदग्निष्टोम इत्यादिषु तत्रापि रूढिवशादयमेवार्थ इति दशमे वक्ष्यते। चरुशब्दोऽपि स्थाल्यां लाक्षणिकः। तेनासत्यपि वाक्यशेषे 'सौर्यं चरु'मित्यादावोदनवचनत्वमेवेति दशमे वक्ष्यते। न च 'सन्दिग्धेषु वाक्यशेषा'दित्यनेन गतार्थत्वम्। इह वाक्यशेषात्प्रागर्थान्तरं निर्णीतं वाक्यशेषेण बाध्यते न तु प्रथमं सन्दिग्धं तेन निर्णीयत इति[1]"।

## ६ म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम्।

## चोदितं तु प्रतीयेताविरोधात् प्रमाणेन॥ १०॥

"ये शब्दा न प्रसिद्धाः स्युरार्यावर्त्तनिवासिनाम्।
तेषां म्लेच्छप्रसिद्धोऽर्थः किं[2] ग्राह्यो नेति चिन्त्यते[3]॥

पिक-नेम-सत-तामरसशब्दा हि आर्याणामप्रसिद्धार्थकाः, म्लेच्छानां तु कोकिलादिषु प्रसिद्धाः। तत्र यदि म्लेच्छप्रसिद्धिरप्रमाणमेव ततो निरुक्तादिवशेनार्थः कल्प्यः। अथ सा प्रमाणं तर्हि सैव ग्रहीष्यते।

तत्र—

"निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी।
शास्त्रस्था वेत्यनेनासौ कल्प्यापि हि बलीयसी[4]"॥

म्लेच्छा हि दृष्टार्थव्यवहारित्वात् न शब्दार्थाविप्लवे यतन्ते तस्मा-

---

१ शास्त्रदीपिका, पृ० ३५-३६।

२ मूलपुस्तके 'किं' इत्यस्य न पाठ।

३ तन्त्रवार्त्तिक, पृ० १५५।

४ तन्त्रवार्त्तिक, पृ० १५६।

न्तेषु प्रसिद्धोऽप्यर्थो न विस्रम्भणीयः। निरुक्तादिद्वारेण तु अर्थवत्ताकल्पने तेषामप्यर्थवत्ता भविष्यतीति पूर्वः पक्षः। उच्यते—

"पदानि तावदेतानि वेदादिष्वेव दर्शनात्।
अविप्लुतानि तेषाञ्च भाव्यमर्थेन केन चित्[1]"॥

स च म्लेच्छप्रसिद्धोऽपि गृह्यते।

"आर्यैः सहाविरुद्धत्वात् तस्य तैरप्यपेक्षणात्[2]"।

यत्तु 'शास्त्रस्था बलीयसी'[3]ति तन्न।

"प्रसिद्धौ विद्यमानायां तद्बलीयस्त्वमिष्यते।
असत्यां तु बलीयस्त्वं बन्ध्यासुतबलोपम्[4]"॥

निरुक्तादिप्रसिद्धिस्तु—

"विक्षिप्ता बहुरूपा च या सन्देहप्रवर्त्तिनी।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते[5]"॥

तस्मान्म्लेच्छप्रसिद्ध एव पिक इति कोकिलः।

नेमोऽर्धम्। सत इति दारुमयपात्रम्, वर्त्तुलं शतच्छिद्रम्। तामरस पद्मम्। इत्येवमादिरर्थो ग्राह्यः।

## ७ कल्पसूत्राणामस्वतःप्रामाण्याधिकरणम्।

### प्रयोगशास्त्रमिति चेत्॥ ११॥

"कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते।
किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत्॥ १॥

---

१ शास्त्रदीपिकायामुद्धृतेयं कारिका।

२ तन्त्रवार्त्तिक, पृ० १५८।

३ तन्त्रवार्त्तिक, पृ० १५८।

४ तन्त्रवार्त्तिक, पृ० १५८।

५ तन्त्रवार्त्तिक, पृ० १६०। अत्र 'प्रवर्त्तिनी'त्यस्य स्थाने 'प्रदायिनी'ति मुद्रितपुस्तकपाठः।

किम्वा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम् ।
वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥ २ ॥
सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते[१]" ॥ ३ ॥

अथवा मन्वादिस्मृतयोऽप्यत्रोदाहरणम् । यद्वा अङ्गान्यत्रोदाहरणम् । शाक्यादिग्रन्था वा । "तदेतानि चत्वार्यपि विचारस्थानानि समानन्यायानि सह विचार्यन्ते—किमेषां स्वातन्त्र्येण प्रामाण्यं नवेति[२]" तत्र शाक्यादिव्यतिरिक्तानां प्रामाण्यं तावदवगीतमेव । तत्किमेषामेवापौरुषेयत्वं वेदत्वं वा कल्प्यं उत वेदमूलकत्वमिति संशये—

" वेदं हि कल्पयित्वैभ्यः पुनस्तस्यापि नित्यता ।
वक्तव्यैव वरं तेन सा तेष्वेवावधारिता ॥ ४ ॥
सिद्धानां नित्यतैवैका सुबोधा वेदतापि वा[३] " ।

शाक्यादिग्रन्थेभ्योऽप्यवगतिस्तावज्जायते सा च स्वतः प्रमाणम् । न च तेषां पौरुषेयत्वम् ।

" येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते ॥ ५ ॥
न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति[४] " ।
शुद्धवाक्यसमाख्यापि प्रवक्तृत्वे निबन्धना ॥ ६ ॥
तच्छिष्टत्वनिमित्ता वा काठकाङ्गिरसादिवत् ।

तदुक्तैः (क्तं) शाक्यैः—यथोत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्मनित्यतेति । उत्पादिति प्रवाहनित्यत्वमभिप्रेत्य

---

१ तन्त्रवार्त्तिक, पृ० १६१ ।
२ शास्त्रदीपिका, पृ० ३९ ।
३ तन्त्रवार्त्तिक, पृ० १६६ ।
४ तन्त्रवार्त्तिक, पृ० १६८ ।

अनुत्पादादिति कूटस्थनित्यत्वम्। तथागता बौद्धाः। तस्मात् स्वातन्त्र्यममीषामिति प्राप्तावाचक्ष्महे—

" नैतेषां पौरुषेयाणां स्वातन्त्र्यमुपपद्यते।
विस्पष्टं पौरुषेयत्वं दृढकर्तृस्मृतेर्वशात्[1] " ॥

" पुरुषपरम्परयैव ह्येषु कर्त्तारः स्मर्यन्ते। न काठकादिवत् प्रवचनेन परिहर्त्तुं शक्यन्ते। तत्र हि समाख्यानमात्रम्[2] "। न च कल्पादीनामनित्यत्वे नित्यब्रह्मयज्ञाङ्गतया विधेयत्वानुपपत्तिः। ग्रन्थव्यक्तेरनित्यत्वेऽपि सर्वकालमेवंविधकिञ्चिद्व्यक्तिसत्वेन तदुपपत्तेः। तस्माद्वेदमूलकत्वेनैव कल्पादीनां प्रामाण्यम्। शाक्यादीनां तु स्वरूपेण नित्यताभ्युपगमे सर्वं क्षणिकमितिसिद्धान्तव्याकोपः। प्रवाहनित्यत्वात्तत्र कजात्(?) परक(?)यत्किञ्चिद्व्यक्तिसार्वदिकत्वरूपा अशक्याभ्युपगन्तुमपोहवादिना। तस्मात् स्थितैव धर्मनित्यतेत्येतत् स्वसिद्धान्तविरुद्धमेव ॥

## ८ सामान्यश्रुतिकल्पनाधिकरणम्।

### अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्॥ १५ ॥

प्राच्यादिभिरेवानुष्ठीयमाना होलाकादयः[3] छन्दोगादिभिरेव परिगृहीता गौतमादिस्मृतयश्च किं तेषामेव धर्मा उत सर्व-साधारणा इति संशयः। तत्र—

---

१ शास्त्रदीपिकाकारैर्धृतेयं कारिका, पृ० ३९।

२ शास्त्रदीपिका, पृ० ३९।

३ वसन्तोत्सवो होलाका अर्कवृक्षादिरूपस्वकुलक्रमागतस्थावरदेवताभ्यर्चनरूपा क्लिनैबुकादयो दाक्षिणात्यैर्मातृगणपूजालक्षणयागादय प्रतीच्यैर्ज्येष्ठपौर्णमास्यामर्चना-पूर्वकक्रियमाणवृषभधावनरूपा वृषभयज्ञादय उदीच्यैरित्यादिशब्दार्थ —मयूखमालिका पृ० ४१।

"लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते।
धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते[1]" ॥ १ ॥

इत्येव प्राप्ते ब्रूयात्—

"विशेषाभावमात्रेण प्रसिध्येत्सर्वधर्मता।
विशेषणाद्व्यवस्था स्यात्तच्च नेहोपपद्यते[2]" ॥ २ ॥

न हि सर्वधर्मत्वे प्रमाणान्तरमपेक्षितम्। विधिनैव सामान्यतः प्रवृत्तेन तत्सिद्धेः। व्यवस्थावादिना तु विधेर्विशेषघटितत्वं वाच्यम्। न च तत्र प्रमाणमस्ति, न वा सम्भवति सर्वैरप्याचरितेषु अनुगतस्यानाचरितेभ्यश्च व्यावृत्तस्य जातिगुणसंस्थानादेर्दुर्निरूपत्वात्। प्राच्यादिसमाख्यापि व्यभिचारिणी निर्दिश्यैरपि कैश्चिदनाचरणात् चिरविनिर्गतपुत्रपौत्राणां तदाचरणदर्शनाच्चेति। तस्माद्विशेषस्य निष्प्रमाणकत्वात् दुर्निरूपत्वाच्च सर्वधर्मत्वमाचाराणां स्मृतीनां चेति सिद्धम्।

## ९ साधुपदप्रयुक्त्यधिकरणम्।

### प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥

व्याकरणं प्रमाणमप्रमाणं वेति चिन्त्यते। तत्र—

"निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात्।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भवः[3]" ॥

नियमद्वयार्थं हि व्याकरणम्। साधूनेव प्रयुञ्जीतेति प्रयोगनियम एकः। गवादय एव साधवो न गाव्यादय इति साधुत्व-

---

१ शास्त्रदीपिकाकारैर्धृतेयं कारिका, पृ० ४१।

२ शास्त्रदीपिका, पृ० ४२।

३ शास्त्रदीपिकाकारैर्धृतेयं कारिका, पृ० ४३।

स्वरूपनियमोऽपरः । तत्राद्ये तावत् प्रत्यक्षादीनां न मूलत्वं, तेषां धर्माधर्मयोरप्रवृत्तेः । नापि वेदवाक्यानि मूलं, गवादिषु प्रतिपद-मनन्तवाक्यपाठासम्भवात् । अपठितानां च मूलत्वानुपपत्तेः । न च साधूनेव प्रयुञ्जीत इति एकेनैव लक्षणेन सर्वसङ्ग्रहः । साधुत्वस्य दुर्वचत्वात् । वाचकत्वमेव तदिति चेत्—प्रयोगप्रत्ययानुपपत्त्या गाव्यादिष्वपि तत्सिद्धेः । अनादित्वं तदिति चेत्—गाव्यादिष्वपि सम्बन्धकर्त्तुरस्मरणेन तत्सिद्धेः । अदृष्टसाधनत्वं तदिति चेत्—तस्य प्रत्यक्षाद्यविषयत्वात् । साधुभिर्भाषितेति वेदादेव तत्प्रमितावात्मा-श्रयापत्तेः । एतेन द्वितीयनियमोऽप्यपास्तः । तस्मान्मूलाभावा-दप्रमाणं व्याकरणम् ।

किञ्च सूत्रकारो हि "समर्थः पदविधि"रित्यादि[1] सूत्राणि प्रणयति । भाष्यकारश्च प्रत्याचष्ट इति परस्परविगानम् । अपि च उक्तरीत्या निर्मूलत्वादेव निष्फलत्वम् । अपि च 'दृष्टं साम'-त्यधिकृत्य 'कलेर्ढक्', 'वामदेवाड्ड्यड्ड्या'वित्युक्तम् । वेदे तु 'यदकालयत्तत्काले यस्य कालेयत्वं ततो वसु वामं समभव'दित्युप-न्यस्य 'वामं वा इदं देवेभ्योऽजनि तस्माद्वामदेव्य'मिति । तथा च वेदबाधः । अपि च—

"ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः[2]" ॥

इत्यभ्युपगमादर्थवत्प्रातिपदिकं क्रियावाचको धातुरिति चाभ्यु-पगमात् पूर्वापरविरोधः । तस्मादप्रमाणं व्याकरणम् । ततश्च गाव्यादयोपि गवादिवदेव प्रयोक्तव्या इति ।

---

१ पाणिनीयसूत्रम् ।
२ तन्त्रवार्त्तिक, पृ० २२० ।

तत्र सूत्रम्—

"यद्येव[1] तुल्यपाण्यादिरूपत्वाद्वर्णसङ्करम्

वदतः स्मृतिबाधः स्यात् तथा वाचकसङ्करम्[2]" ॥

यत्तु स्मृतिर्निर्मूलेति तन्न। प्रयोगनियमे मन्वादिवत् वेदमूलत्वात्। प्रत्यक्षमेव च वाजसनेयादिषु वचनम्—'तस्मात् ब्राह्मणेन न म्लेच्छितवै' इति। द्वाभ्यामेव च वाक्याभ्यां साधून् प्रयुञ्जीत नासाधूनिति समस्तशब्दापशब्दविधिप्रतिषेधसिद्धेर्नानन्तवाक्यकल्पनापत्तिः। अनादित्वं वाचकत्वं अनपभ्रष्टत्व व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्यो जातिविशेषो वा साधुत्वम्। तदभावश्चासाधुत्वम्। न च गाव्यादीनामशक्तत्वेऽबोधकतापत्तिः। साधुशब्दस्मृतिद्वारा प्रबलतरशक्तिभ्रान्तिबलाद्वा तदुपपत्तेः। एवञ्च—

"यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम्।

तथा व्याकरणात् सिद्धं साधुशब्दनिरूपणम्[3]" ॥

एवञ्च स्वरूपनियमेऽपि उदात्तादिविभाग इव प्रत्यक्षं मूलम्। तस्मा'देकस्यैव वाचकत्वे इतरेव तदशक्तिजाः' इति नाष्टदोषदुष्टविकल्पापत्तिः।

"या तु हस्तः करः पाणिरित्यत्रानेकशब्दता।

अनन्यगतिकत्वेन सा दृढस्मरणेन च[4]" ॥

यदपि विगीतत्वादिति तन्न। सूत्रप्रत्याख्यानादेरवेदमूलत्वे केन उपायमात्रतया उपेयांशे अविगानात्। समूलत्वादेव च वैफल्यमपि निरस्तम्।

१ अत्र 'यथा चे'त्यादि मुद्रितपुस्तकपाठ।

२-३ तन्त्रवार्त्तिक, पृ० १३१।

४ तन्त्रवार्त्तिक, पृ० १२६।

यदपि वेदबाधनादिति तदपि न ।

"धर्मसाधनतांशे हि विगानं नैव विद्यते ।

अन्वाख्यानविगान तु लक्ष्यभेदान्न दुष्यति[1]" ॥

यदपि पूर्वापरविरोधादिति तदपि न । प्रकृतिप्रत्ययविभागस्य कल्पितत्वेन निरवयवस्फोटव्युत्पादन एव तात्पर्यमिति वैयाकरण-सिद्धान्ते तात्पर्यविषयीभूतांशे अविरोधात् । आपातप्रतीतिविरोधस्तु अर्थवादेष्विव न दोषमावहति । तस्मात् व्याकरणं प्रमाणमिति सिद्धम् ।

## १० आकृतिशक्त्यधिकरणम् ।

### प्रयोगचोदनाभावादर्थैकत्वमविरोधात्[2] ॥ ३० ॥

गवादयो वाचका न तु गाव्यादय इति निर्णीते वाचकप्रसङ्गा-द्वाच्यविशेषश्चिन्तयिष्यते—किमाकृतिरुत व्यक्तिरिति ।

तदुपोद्घातत्वेनेदं चिन्त्यते—किं लोकवेदयोः शब्दार्थौ भिन्नावुता-भिन्नाविति ।

तथा हि—भेदपक्षे लोकव्यवहाराननुपातिनां वैदिकशब्दानां शक्तिरेव दुर्ग्रहा । उपायाभावात् । अतो नारम्भणीयमाकृत्यधि-करणम् ।

अभेदपक्षे तु लोके वृद्धव्यवहारानुसारेण कृतः शब्दार्थनिर्णयो वेदे फलिष्यति । तेनाकृत्यधिकरणस्यायमुपोद्घातः । तत्र सत्यपि कतिपयवर्णभेदे स्वरच्छान्दसवर्णागमलोपविकारविपर्ययादिधर्मभेदेन लोकवेदयोः पदानां भेदः । स्वरूपादिशब्दसाहचर्याच्च । तथा

---

१ तन्त्रवार्त्तिक, पृ० २३८ ।

२ अविभागादिति मुद्रितपुस्तकपाठ ।

'उत्ताना वै देवगवा वहन्ती'त्यादिदर्शनादर्थोऽप्यन्य इति प्राप्ते ब्रूमः—

" प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् ।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते[१] " ॥

ननु स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः ।

" पदावधारणोपायान् बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः[२] " ॥ इति

सत्यम् । यो ह्यर्थप्रतीत्यौपयिको धर्मस्तद्भेदेन भिद्यत एव पदम् । यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वम् । अन्तोदात्तत्वे स्वार्थवृत्तिता स्मरणादवगम्यते । ब्रह्मब्राह्मणादिषु तु न्यूनातिरिक्तत्वात् जराराजादिषु क्रमान्यत्वात् । न चैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति । यदि हि अनियतस्वराणामन्योऽर्थः, नियतस्वराणां चान्य इति स्यात्तदा स्यादेव पदभेदः । पद्यते गम्यतेऽनेनेति हि पदम् । अतो गमकस्वरूपस्य भेदे सत्येव भिद्यते । न तु धर्ममात्रभेदात् । एवं देवासः त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि अर्थान्तरानवगमात् सत्यपि वा केषांचित् भेदे अग्निमित्रादीनां भेदस्याप्रमाणकत्वात् सिद्धमेकत्वं लोकवेदयोः पदानाम् । पदैक्ये चार्थानामप्येकम् । उत्तानादिवचनं त्वन्यपरम् ॥

एवं स्थिते विचार्यते—किमाकृतिः शब्दार्थ उत व्यक्तिरिति ।

" द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि ।
व्याख्यातारस्तथाप्यत्र ब्रूयुः पक्षान्तराण्यपि ॥
नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।
सम्बन्धः समुदायो वा विशिष्टा वैकयेतरा ॥

---

१-२ शास्त्रदीपिकाकारैरुद्धृते कारिके ।

एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम् ।
लिङ्गकारकसङ्ख्याभिः संहतासंहतात्मभिः ॥
पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना ।
एवं शब्दस्वरूपस्य पुनर्जात्यादिभिः सह[1] " ॥

गोशब्दार्थः किमाकृतिरेव, अथ व्यक्तिरेव, उताकृतिर्वा व्यक्तिर्वा । अथाकृतिश्च व्यक्तिश्च । किं वोभयोः सम्बन्धः । उत समुदायः । किमाकृतिविशिष्टा व्यक्तिः, उत व्यक्तिविशिष्टा आकृतिरिति[2] । एषैव चाष्टपक्षी लिङ्गादिभिर्व्यस्तसमस्तैर्योज्या । एवञ्च यद्यप्यनेकपक्ष-सम्भवेत् तथाप्याकृतिरेवेति दृढ़ः पक्षोऽयमेकतः । इत्यन्यतः सर्वे व्यक्तिपक्षानुपातिनः । तस्मात्—

" दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः ।
का शब्देनाकृतिव्यक्त्योरुच्यते काऽनुगम्यते[3] " ॥

तत्र—

" प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता ।
न ह्याकृतिरमूर्त्तत्वाद्व्यवहारोपयोगिनी[4] " ॥

न हि आकृतावववहननालम्भनादीनि सम्भवन्ति । न चाक्षिप्तव्यक्तौ तदन्वयः । आक्षेपो हि अनुमानमर्थापत्तिर्वा । तथा चाशब्दार्थत्वा-द्व्यक्तेः पदार्थान्तरान्वयो न स्यात् । उक्तं हि तद्भूताधिकरणे—

गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीति वत् ॥ इति

अथ लक्षणयैवाक्षेपः तथापि तस्याः शक्यान्वयानुपपत्तिज्ञाना-धीनतया प्रथमं सामान्यबोधस्यानुभवविरुद्धस्यापातात् । तस्मा-

१-२ तन्त्रवार्त्तिक, पृ० २४५-२४७ ।
३ तन्त्रवार्त्तिक, पृ० २४८ ।
४ शास्त्रदीपिका, पृ० ५० ।

ड्व्यक्तिरेवार्थः। कथं तर्हि व्यक्त्यन्तरे प्रयोगः। या एवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शक्तिग्रहादित्यवेहि। यः शुक्लवासाः स देवदत्त इतिवत्। यथा चोपलक्षणभूतं वासो न शक्यकोटिनिविष्टं तथेह जातिरपि। अस्तु वा जातिविशिष्टव्यक्ति-रेव वाच्येति पूर्वः पक्षः।

सिद्धान्तस्तु—

विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।
व्यक्तावाक्षेपलभ्यायामवघातादिसम्भवः॥

यत्तूक्तमनुपपत्तिज्ञानाधीना लक्षणेति तन्न। निरूढलक्षणाया अतथात्वात्।

वस्तुतस्तु जातिव्यक्त्योरभेदादेव लक्षणाप्यनावश्यकी।

आह च—

"तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदना।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः[1]"॥ इति

अस्मिंश्च पक्षे यद्यपि व्यक्तयः सामान्यात्मना वाच्या एव तथापि विशेषरूपेण वाच्यत्वं नास्तीति प्रतिपादयितुमिदमधिकरणम्। अत्र च नामाख्यातयोरेव विचार्यता। न तु निपातोपसर्गयोः। तदुक्तम्—

"चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थद्योतकौ तौ तु वाचकः सविचार्यते[2]"॥ इति

१ शास्त्रदीपिका, पृ० ५१।
२ तन्त्रवार्त्तिक, पृ० २६०-२६१।

नाम्नामपि मध्ये जातिशब्द एवोदाहरणम् । न तु गुणक्रियाद्रव्ययदृच्छासर्वनामशब्दाः । प्रयोजनन्तु पूर्वपक्षे सामान्यविशेषशब्दयोरेकविषयतया सामान्यशिष्टस्य विशेषशिष्टेनाबाधः । सिद्धान्ते तु बाध इति ।

इति मीमांसाशास्त्रसर्वस्वे प्रथमाध्यायस्य तृतीयः पादः ।

## प्रथमाध्याये चतुर्थः पादः ।

### १ उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणम् ।

**उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ।**

इह सम्भवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठबहिष्पवमानाग्निहोत्रश्येनादिशब्दानुदाहृत्य चिन्त्यते किमेते धर्मे प्रमाणमुत नेति । तत्र विधिभावना तदंशत्रयाप्रतिपादकत्वेन विधिबहिर्भावात् स्तावकत्वाभावेन चार्थवादे बहिर्भावान्मन्त्रत्वप्रसिद्ध्यभावेन चामन्त्रत्वान्नाममात्रस्य च प्रवृत्तिविशेषकत्वाभावेनानर्थकत्वादप्रसिद्धार्थकत्वाच्चाप्रमाणमेवंजातीयकमिति प्रापय्य स्वाध्यायविध्यध्यापितस्यानर्थक्यासम्भवात्त्वदुक्तमार्गेण च मन्त्रार्थवादत्वासम्भवाद्विध्युद्देशान्तर्भावेनैव प्रामाण्यमेषामावश्यकमित्यपर्य्यवसितमेव सिद्धान्तयितव्यम् । तदेतदर्थवादप्रस्तावेऽभिहितमपि अनेकविचारव्यवहितत्वात् विशेषविचारायोपस्थापितम् ।

## २ उद्भिदादिशब्दानां यागनामधेयताधिकरणम् ।

**अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥**

नामधेयानि प्रमाणमिति स्थितम् । तत्रोद्भिदादिषु यौगिकेषु चिन्त्यते—गुणविधिः कर्म नामधेयं वेति ।

" तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः ।
प्रवृत्त्यौपयिकत्वाच्च गुणो यागे विधीयते[1] " ॥

न च मत्वर्थलक्षणा यागानुवादात् । उक्तं हि—

" करणेषूपदिष्टेषु यार्थात्साध्यत्वकल्पना ।
तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा[2] " ॥

" यदि ह्यत्र यागो विधीयेत ततस्तस्य करणत्वात् उद्भिदादेरपि करणस्य करणान्तरसम्बन्धायोगात् सामानाधिकरण्यनिर्वाहायोद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वा उद्भिद्वता यागेनेति वर्णनीयं स्यात्[3]" । यदा तु यागभाव्यकायां भावनायां करणत्वेन गुणो विधीयते तदा वैयधिकरण्येनैवान्वयान्नोक्तदोषः । न चैवं ज्योतिष्टोमवाक्येऽपि गुणविधानं न तु यागविधिरिति क्वाप्यविहितस्य यागस्य कथमनुवाद इति वाच्यम्, प्रकृतकर्माभावेनागत्या ज्योतिष्टोमवाक्ये मत्वर्थलक्षणमाश्रित्य गुणविशिष्टकर्मविधानात् । उद्भिदादयस्तु तत्रैव गुणविधयः । न चोत्पत्तिशिष्टज्योतिष्टोमगुणावरुद्धे[4] उद्भिदादिगुणविधानासम्भवः । काम्यत्वेन तेषां बाधकत्वात् । प्रकृतं

---

१ शास्त्रदीपिका, पृ० ५५ ।

२ तन्त्रवार्त्तिक, पृ० २९९ ।

३ शास्त्रदीपिका, पृ० ५६ ।

४ 'न चौत्पत्तिकज्योतिष्टोमादिगुणावरुद्धे' इत्यादि शास्त्रदीपिकापाठ', पृ० ५७ ।

ज्योतिष्टोममाश्रित्योद्भिद्गुणः पश्वर्थत्वेन विधीयत इति वास्तु । तस्माद्गुणविधिरिति प्राप्तेऽभिधीयते—

" धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा ।
फले कर्मणि वा नेह गुणो वाक्ये विधीयते[१] " ॥

" फले विधीयमाने गुणे परपदसम्बन्धविधानाद्धातोरत्यन्तपारार्थ्यं विप्रकृष्टार्थविधिश्च । अथ तु कर्मण्येव गुणो विधीयते तथापि विप्रकृष्टार्थविधानं, धातोश्च किञ्चित्पारार्थ्यमस्त्येव फलपदं चानर्थकं स्यात् ।

दध्यादौ गत्यभावेन सर्वमेतत्समाश्रितम्[२] ।
उद्भिदादिषु तन्नैवं नामधेयत्वसम्भवात्[३] " ॥

" दध्नेन्द्रियकामस्य जुहुयात्,' 'व्रीहिभिर्यजेतेत्येवमादिषु दधिव्रीह्यादिपदानामर्थान्तरे निरूढत्वान्न सामानाधिकरण्येन यजिनामत्वम् । अप्रसिद्धार्थं हि प्रसिद्धपदसामानाधिकरण्येन निर्णेयं न त्वत्यन्तनिरूढमपि तदुक्तम्[४] "—

" पदमज्ञातसन्दिग्ध[५]प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते[६] " ॥

इति तथा च गत्यभावाद्दध्यादौ धातुपारार्थ्यं विप्रकृष्टार्थविधानं चाश्रितम् । उद्भिदादयस्तु यथैवावयवद्वारेण खनित्रादौ वर्तन्ते तथैव स्वफलोद्भेदनकारित्वाद्यागेऽपीति नात्र धात्वर्थविधानं बाधितव्यम्—

१ शास्त्रदीपिका, पृ० ५७ ।
२ शास्त्रदीपिकाया 'समञ्जस'मिति पाठ' ।
३ शास्त्रदीपिका, पृ० ५७-५८ ।
४ शास्त्रदीपिका, पृ० ५८ ।
५ चात्र सम्बन्धमिति पाठान्तरम् ।
६ तन्त्रवार्त्तिक, पृ० २८९ ।

"विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा ।
सोमादौ गत्यभावात्सा न त्वत्र गतिसम्भवात्[१]" ॥

"प्रयोजनञ्च नाम्नां व्यवहार एव सर्वत्र न ह्यनन्तरेण नामधेयं ऋत्विग् वरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः । क्वचिच्च गुणफलोपबन्धेनार्थवत्ता । 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपे'दिति गुणोपबन्धः । 'दर्शपूर्णमासाभ्यां स्वर्गकाम' इति फलोपबन्धः । क्वचित्कर्मभेदकतयाऽर्थवत्वम्—यथाऽत्रैवो'द्भिदा यजेते'ति[२]" । क्वचिच्चातिर्देशकत्वेन—यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति ।

## ३ चित्रादिशब्दानां यागनामताधिकरणम् ।

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

'चित्रया यजेत पशुकामः,' 'पञ्चदशान्याज्यानी'त्युदाहृत्य चिन्त्यते—किं चित्राज्यशब्दौ विधेयगुणसमर्पकौ उत नामधेयमिति । तत्र चित्रयेत्यग्नीषोमीये गुणविधिः । तथाहि—

"चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः ।
तेनैते प्राणियागाङ्गं प्रकृतिं दैत्तमाश्रिते[३]" ॥

"स्त्रीत्वादिविभागो हि प्राणिव्यतिरिक्तेऽर्थे शब्दानुकारमात्रेण विज्ञायते । पश्वादिषु तु वास्तवः । प्रकृतञ्च दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमितिदध्यादिद्रव्यकं कर्म तच्च स्त्रीत्वान्वयायोग्यमिति प्रकरणादुत्कृष्यमाणे वाक्याद्यागमात्रसम्बन्धिनी प्रसक्ते सामर्थ्यात् प्राणियागमाकाङ्क्षन्ती प्रकृतौ वा

१ शास्त्रदीपिका पृ० ५८ ।
२ शास्त्रदीपिका, पृ० ५९ ।
३ तन्त्रवार्त्तिक, पृ० २८९ ।

द्विरुक्तत्वादित्यनेन न्यायेन सर्वप्राणियागपरमप्रकृतिमग्नीषोमीयं चित्रत्वस्त्रीत्वे गच्छतः[1] ”। न चोद्भिन्न्यायः निरूढत्वात् नापि मत्वर्थलक्षणा। “उत्पत्तिवाक्यावगतकरणत्वेनार्थाक्षिप्तं यद्यागस्य साध्यत्वं तदनुवादेन वैयधिकरण्येन गुणविधानात्। नापि वाक्यभेदः। एकपदोपात्तत्वाच्चित्रत्वस्त्रीत्वयोरुभयविशिष्टैककारक-विधानात् पशुकामपदमपि साधनकामनानुवादः। अस्ति हि पशुयागं कुर्वतः पशौ कामना। एवं पञ्चदशान्याज्यानीत्यत्रापि सङ्ख्याविशिष्टाज्यविधानान्न वाक्यभेदः। तस्माद्गुणविधिः। एवञ्चाज्यैः स्तुवत इत्याद्युत्पत्तिवाक्येऽप्याज्यादिपदं गुणवाक्यप्राप्तगुणानुवादकं न नामधेयमिति प्राप्ते[2] ” ब्रूमः—

“वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः।
अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते[3] ” ॥

“चित्रत्वं स्त्रीत्वं च नैकेन वाक्येन विधातुं शक्यम्। उभय-विशिष्टकारकविधानेऽपि गौरवम्। कामपदं च फले मुख्यं साधने तु गौणम्। प्रकृतफलाकाङ्क्षदध्यादिद्रव्यकयागातिक्रमश्च न न्याय्यः। तस्मात् तस्यैव[4] फले विधानम्। चित्रापदं च सामानाधिकरण्येन नामधेयम्[5] ”। दध्यादिचित्रद्रव्यकत्वाच्च यागेऽपि चित्र-शब्दोपपत्तिः। पञ्चदशान्याज्यानीत्यत्रापि समासाभावान्न विशिष्ट-द्रव्यविधिः। द्रव्यसङ्ख्ययोर्विधाने तु वाक्यभेदः। न वा क्रिया-विशेषणं विधीयते। विधायकस्य नामपदैः सह साक्षादसम्बन्धात्।

---

१ तन्त्रवार्त्तिक, पृ० २८९। शास्त्रदीपिका, पृ० ३१
२ शास्त्रदीपिका, पृ० ६२।
३ शास्त्रदीपिका, पृ० ६२।
४ तत्रैवेति शास्त्रदीपिकासम्मत पाठ।
५ शास्त्रदीपिका, पृ० ६२।

न चेह क्रिया काचिदुपाया विधीयमानार्थादनेकमपि गुणमाक्षिपेत्। आह च—

"अर्थादनेकमप्यर्थं विधापयति भावना।
विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम्[1]"॥ इति

"न चैषां स्तुतिप्रयोगवचनेन ग्रहणम्। अक्रियात्मकत्वात्। आह च—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः[2]"॥ इति

आज्यस्य संसर्गिद्रव्यत्वेन साक्षात्पञ्चदशत्वानुपपत्तौ अश्रुतफलादिपरिमाणकल्पनापत्तिश्च।

तस्मादाज्यानुवादेन सङ्ख्यामात्रं विधीयते।
अतः पञ्चदशानीति शब्दोऽपि स्यात् समञ्जसः॥

'स्तोमे डविधिः पञ्चदशाद्यर्थ' इति हि स्तोमे डप्रत्ययः स्मर्य्यते। स्तुतेश्च मानस्तोमः स्तुतिसाधकतमस्तोत्री पापविच्छेदक इत्यर्थः। तस्मात् गुणवाक्यवशेन नामधेयत्वम्। सामानाधिकरण्याच्चाज्यैः स्तुवत इति वाक्यशेषाच्च। "यदाजिमीयुस्तदाज्यानामाज्यत्वमिति[3]"।

## ४ यागनामधेयताधिकरणम्।

## तत्प्रख्यं चान्यशास्त्रम्॥ ४॥

'आघारमाघारयति,' 'अग्निहोत्रं जुहोती'त्याघारशब्दोऽग्निहोत्रशब्दश्च गुणविधिः कर्म नामधेयं वेति संशयः।

---

१ तन्त्रवार्त्तिक, पृ० २९१।
२ तन्त्रवार्त्तिक, पृ० २९३।
३ तन्त्रवार्त्तिक, पृ० २९४।

तत्र "प्रसिद्धादिभिर्गुणविधिः । न च मत्वर्थलक्षणा । अग्निहोत्रशब्दे बहुव्रीहिणैवाग्नये होत्रमस्मिन्निति मत्वर्थस्योक्तत्वात् । उपसर्जनार्थोऽग्निर्देवता विधीयते[१]" । आह च—

"सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादिता[२]" ॥ इति

"नामधेयत्वे चारूपत्वं स्यात् । यद्यपि च दध्यादिवाक्यैर्द्रव्यं लभ्यते तथापि देवताभावादरूपत्वम् । न च 'यदग्नये च प्रजापतये च सायं जुहोति', 'यत् सूर्याय च प्रजापतये च प्रात'रिति देवतालाभः अनेकगुणोपपादनेन विशिष्टकर्मविधायकत्वात् अन्यथा वाक्यभेदात्[३]" । यदाह—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः[४]" ॥ इति

"आघारशब्देनापि क्षरणसमर्थं आज्यपयःप्रभृतिद्रव्यमभिधीयते । तच्च द्वितीयानिर्देशादाघारणसंस्कार्यत्वेनावगम्यते । निष्प्रयोजनस्य च संस्काराभावात् प्रयोजनापेक्षायां प्रकृतद्रव्यापेक्षोपांशुयाजार्थता विज्ञायते । प्रकरणेन च गुणे विधीयमाने नास्ति मत्वर्थलक्षणा । मतुप्प्रत्ययुक्तस्यैव वाक्यस्य कल्पनात्[५]" । आह च—

"श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने ।
लक्षणावाक्यभेदादिदोषो नानुमिते त्वसौ[६]" ॥

इति । तस्मात् गुणविधिः ।

---

१ शास्त्रदीपिका, पृ० ६३ ।
२ तन्त्रवार्त्तिक, पृ० २९० ।
३ शास्त्रदीपिका, पृ० ६३-६४ ।
४ तन्त्रवार्त्तिक, पृ० ४७६ ।
५ शास्त्रदीपिका, पृ० ६४-६५ ।
६ तन्त्रवार्त्तिक, पृ० २९१ ।

"एवञ्चाघारस्य संस्कारत्वात् द्वितीयानिर्देशोऽप्युपपद्यते। अग्निहोत्रे चार्थाच्चिप्तसाध्यत्वानुवादेनोपसर्जनार्थविधानात्। नामधेयत्वे तु कर्मैव विधेयम्। तच्च करणमिति तृतीयान्तं स्यादिति[1]" प्राप्तावुच्यते—

"विधिस्त्वितगुणप्रापि शास्त्रमन्यद्यनस्त्विह।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते[2]"॥

किञ्च—

"वाक्यार्थो न विधातव्यो धात्वर्थविधिसम्भवे।
पदान्तरं न चानन्यगतिनामत्वसम्भवात्[3]"॥

"किं पुनः शास्त्रान्तर यदस्य गुणस्य प्रख्यापकं, उच्यते—

अग्नेस्तावद्'ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे'ति प्रातरिति वाचनिकमन्त्रवर्णात् प्राप्तिः। 'यदग्नये च प्रजापतये साय जुहोती'त्येतत्तु मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानम्। अतो न वाक्यभेदः। आघारवाक्येऽप्याघारसंज्ञके कर्ममात्रे विहिते 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्ये'त्यनेनैवाज्यप्राप्तेः चरणात्मकत्वं प्राप्तमिति तन्निमित्तनामधेयत्वसम्भवात् कर्मविधानमेव युक्तम्। दृष्टं हि 'आघारयती'ति मान्त्रवर्णिकेन्द्रदेवतावत्वाद्यागत्वसिद्धिः। अतो नामत्वम्।[4]"

कथ पुनर्द्वितीयानिर्देशः। न चार्थाच्चिप्तसाध्यांशाभिप्रायकः सः। अशाब्देनानध्याहृतेन च शब्दस्यानन्वयात्। न च भावनान्तराध्याहारः अग्निहोत्रहोमं कुर्याद्धोमेन च फलमिति वाक्यभेदप्रसङ्गात् उच्यते—"अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वम्। अतः साध्य-

१ शास्त्रदीपिका, पृ० ६५।

२ तन्त्रवार्त्तिक, पृ० २९६।

३-४ शास्त्रदीपिका, पृ० ६६-६९।

साधनद्वयोरेकार्थसमवायात् साध्याभिधायिनी द्वितीया साधनत्व-मेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यते इत्यविरोधः[१] "।

## ५ श्येनादिशब्दानां यागनामधेयताधिकरणम् ।

### तद्व्यपदेशच्च ॥ ५ ॥

"इह रूढशब्दा एव वाक्यभेदरहितास्तद्व्यपदेशवन्त उदाहरणम् । यथा—'श्येनेनाभिचरन्यजेते'त्यादिषु श्येनादिशब्दाः तेषु गुणविधिः कर्मनामधेयं वेति संशयः ।

अत्यन्तनिरूढत्वाद्गुणविधिर्ज्योतिष्टोमादिषु काम्यत्वाच्च नित्य-मुत्पत्तिशिष्टमपि सोमं बाधते । यद्वा गुणविशिष्टकर्मविधानं अप्र-सिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत् । न च गौणवृत्त्या कर्मवचनत्वं युक्तं लक्षणातो गौणत्वस्य जघन्यत्वात् । लक्ष्यमाण-गुणैर्योगात् वृत्तिर्गौणीति हि वक्ष्यति[२] "। अपि च गौणत्वे श्रौतार्थ-परित्याग एव स्यात् । "लक्षणायां तु तद्वत्यपि वर्त्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनीभूतश्येनविधिपर एव करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इत्येक-वाक्यत्वार्थं लक्षणाश्रयणम् । तात्पर्यं तु श्रुत्यर्थ एवेति न श्रुतिबाधः ।

उच्यते—

गुणविधौ तावत् स एव स्तोतव्यः । तस्य चात्मनैवोपमानमनुप-पन्नमिति[३] "। यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इति "तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिः । विशिष्ट-विधिस्तु गौरवादेवायुक्तः । न च सोमादिवत् पदान्तरस्यानन्य-गतिकत्वम् । उक्तवाक्यशेषानुसारात् गौणत्वेन नामत्वसम्भवात्[४] "।

१-४ शास्त्रदीपिका, पृ० ६६-६९ ।

वाक्यशेषबलादेव च लक्षणातो दुर्बलाऽपि गौणी समाश्रयणीया । आह च—

"गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्[१]" ॥ इति

"तस्मान्नामधेयम् । एवं यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशैश्चतुर्भि-र्नामत्वं साधितम् । एतैरेव च सर्वत्र नामधेयत्वमिति द्रष्टव्यम्[२]"।

## ६ वाजपेयादिशब्दानां नामधेयताधिकरणम् ।

### नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ४ ॥

'वाजपेयेन स्वाराज्यकामो यजेते'ति वाजपेयशब्दे गुणविधिः कर्मनामधेयं वेति चिन्त्यते । "तदर्थमिदं विचार्यते—

यजेतेत्याख्यातं गुणफलाभ्यां तन्त्रेण सम्बद्धुं क्षमते न वेति सर्वाणि चोद्भिदादीन्यत्रोदाहर्त्तव्यानि ।

तत्र—

सर्वेष्वाख्यातशब्देषु तन्त्रसम्बन्धसम्भवात् ।
मत्वर्थलक्षणादोषो नास्तीत्याक्षिप्यतेऽधुना ॥
कर्मत्वं करणत्वं वा नाख्यातेनाभिधीयते ।
यागादेः किन्तु सम्बन्धमात्रं साधारणं हि तत् ॥

यदि हि यजेतेत्यनेन यागस्य कर्मत्वमुच्यते ततः साध्यद्वया-समवायान्न फलं सम्बध्येत । गुण एव तु साधनतया सम्बध्येत । अथ तु करणत्वमेव यागस्य ततः करणद्वयासमवायान्न गुणः सम्बध्येत । फलमेव तु सम्बध्येतेति न स्यात्तन्त्रत्वम् । इह तु

---

१ तन्त्रवार्त्तिक, पृ० १५५ ।
२ शास्त्रदीपिका, पृ० ६६ ।

प्रकृत्या यागमात्रमुक्तं प्रत्ययेन तु भावना । तयोस्तु समभिव्याहारात् सम्बन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारण्याद्यागकर्मिका यागकरणिका चेति द्विरूपाभावना भवति । सा च यागकर्मत्वांशेन[1] गुणसम्बन्धं तत्करणकत्वांशेन[2] फलसम्बन्धं तन्त्रेणैव लभते । अतो विनैव मत्वर्थलक्षणया यागे गुणविधानमुपपन्नमिति । अत्रोच्यते—

सम्बन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत् ।
तद्विशेषपरत्वे तु स्यादन्यतरसङ्गतिः ॥
रूपद्वयपरत्वन्तु विनाऽऽवृत्त्या न लभ्यते ।
तस्मान्नाख्यातशब्दस्य तन्त्रसम्बन्धसम्भवः[3] ” ॥

“यद्याख्यातेन धात्वर्थभावनयोः सम्बन्धमात्रमवगत ततः फलगुणयोर्मध्ये एकस्यापि तदन्वयो न स्यात् । फलस्य साधनापेक्षत्वात् यागकरणिकैव भावना फलसम्बन्धमर्हति । तथा गुणस्य साध्यापेक्षत्वाद्यागकर्मिकयैव भावनया सह सम्बन्धः । अनिर्धारितोभयरूपा तु नैकेनाप्यन्वीयते । अयोग्यत्वात् । तस्मात् लक्षणया विशेषपरता । तत्र कर्मपरत्वे गुणस्यैव सम्बन्धः करणपरत्वे तु फलस्यैव । उभयपरत्वं त्वावृत्तिं विना दुर्लभम् । एवं गुणप्रधानत्वोद्देश्योपादान[4]विध्यनुवादत्वकृतमपि वैरूप्यमतो न तन्त्रता । आह च—

“ तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम्[5] ” ॥ इति

१ ‘यागकर्मिकांशेने’ति शास्त्रदीपिकासम्मत पाठ ।
२ ‘करणिकांशेने’ति च शास्त्रदीपिकासम्मत’ पाठ ।
३ शास्त्रदीपिका, पृ० ६९-७० ।
४ ‘गुणप्रधानत्वोद्देश्योपादेयत्वे’ति शास्त्रदीपिकाभिमत पाठ ।
५ तन्त्रवार्त्तिक, पृ० ३०० ।

"न तु यथा भावनाकर्मकरणत्वादिरूपभेदमन्तरेणैव साध्यादिभिः सम्बध्यते इदमनेनेत्थं कुर्यादिति तथा यागोऽपि कर्मकरणत्वादिरूपमनादृत्यैव गुणफलाभ्यां सम्बध्यत इति न वैरूप्यमिति चेत्—न। भावना हि क्रियारूपा सर्वकारकसाधारणरूपैवेति युक्तं पदवैरूप्येणानेकसम्बन्धं लभते। यागस्त्वक्रियारूपः कथमिव कारकरूपैर्गुणादिभिः सम्बध्यते। तदसौ भावनाद्वारेणैव आरुणैकहायनीवद्गुणफलाभ्यां सम्बध्यत इति वक्तव्यम्। भावनासम्बन्धोऽपि चास्य न स्वरूपेण सम्भवति। कारकं हि क्रियया सम्बन्ध्यते न वस्तुस्वरूपम्। अतोऽवश्यं कर्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः। तथा चोक्तरीत्या न तत्र सम्बन्धः। तेन गुणविधिपक्षे मत्वर्थलक्षणा स्यादेव। तद्वरं वाजं पेयं सुराद्रव्यमस्मिन्निति सुराग्रहविधानात्तत्प्रख्यतया नामधेयत्वम्[1]"। एवमुद्भिदादीनामिति स्थितम्।

## ७ आग्नेयादीनामनामताधिकरणम्।

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः स्युः ॥ ६ ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्यत्राग्नेयशब्दो गुणविधिर्नामधेयं वेति विचारः।

"तत्रानेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते। तस्य च स्थानक्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गं भवति। अतो मान्त्रवर्णिकोऽग्निरग्निहोत्रवत्प्राप्त इति तद्वदेव तत्प्रख्यन्यायेन नामधेयत्वमित्येवं प्राप्ते ब्रूमहे—

---

१ शास्त्रदीपिका, पृ० ६१-७३।

मन्त्राकाङ्क्षा न चात्रास्ति सत्यामपि न योग्यता ।
मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत्त्रयम् ॥

न ह्यष्टाकपालो भवतीत्येतावता पुरुषव्यापारः कश्चिदुक्तो योऽनुष्ठानाय स्मारकं मन्त्रमपेक्षेत । सत्यामपि तु मन्त्राकांक्षायां पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसम्बन्धायोग्यत्वान्न सम्बन्धः । न च वाचनिको मन्त्रः । येनाघारवद्बलान्मान्त्रवर्णिकी देवता स्यात् । अग्निहोत्रे तु होमस्य पुरुषव्यापारत्वादस्ति मन्त्राकाङ्क्षा । योग्यश्च होमो देवताभिधायिना सम्बन्धुं वाचनिकश्च तत्र मन्त्रः । तेन युक्तं मान्त्रवर्णिकदेवताकल्पनम् । इह तु सम्बन्धस्याकाङ्क्षायोग्यतावशेन कल्प्यत्वान्न यागात्प्राक्सिद्धिरस्तीति न वाक्यभेदः[१] ” ।

## ८ बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ।

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

नामधेयप्रसङ्गेन द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः प्रयुज्यमानानां असंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं यूपादिशब्दवत् संस्कारनिमित्तता उत जातिशब्दतेति चिन्त्यते ।

“तत्र पीत्वादिवदश्ववालादिवच्च शास्त्रस्थयाज्ञिकप्रसिद्धिः । सार्वलौकिकीं जातिमपहाय केचिदेतान् प्रयुञ्जते[२] ”। संस्कारत्वमपहाय जातिमात्रे लौकिकाः प्रयुञ्जते । तेनैषामव्यभिचाराज्जातिवाचिता । “न च जातिमात्रे शास्त्रस्थानामप्रयोगादतद्वचनत्वम् ।

---

१ शास्त्रदीपिका, पृ० ७३-७४ ।
२ शास्त्रदीपिका, पृ० ७५ ।

न हि यो यत्र शक्तः स तत्सर्वैः प्रयोक्तव्य इति नियमः। तस्माज्जातिशब्दः[1] "।

## ६ प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम्।

### प्रोक्षणीष्वर्थसंयोगात्॥ ११॥

"प्रोक्षणीशब्दस्यापि पूर्ववत् संस्कारनिमित्तत्वं प्राप्तमपोद्यासंस्कृतेऽपि क्वचित् प्रयोगादव्यभिचाराच्च जातिनिमित्तता प्राप्ता। न चावयवार्थता युक्ता समुदायप्रसिद्धेर्बलीयस्त्वात्। अवयवद्वारेण हि विशिष्टार्थप्रतीतिर्वाक्यादिव वाक्यार्थप्रतीतिः पदार्थनिमित्ता लाक्षणिकी समुदायप्रसिद्धौ तु श्रुत्या प्रतीतिरिति सैव बलीयसी। उच्यते—

रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका।
तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता[2] "॥

"यथा वृक्षेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा। नादृष्टा समुदायशक्तिं कल्पयति[3] "।

आह च—

"भवेतां यदि वृक्षेषु वाजिकर्णौ कथञ्चन।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्[4] "॥

"इह च सन्त्यवयवार्थाः प्रकृष्टोक्षणहेतुत्वात्। स्त्रीलिङ्गत्वाच्च। तेनात्र नात्मानं लभते रूढिः वाक्यार्थे वाक्यवत्। तस्माद्यौगिकः प्रोक्षणीशब्दः[5] "।

---

१-२ शास्त्रदीपिका, पृ० ७५-७६।
३ शास्त्रदीपिका, पृ० ७६।
४ तन्त्रवार्त्तिक, पृ० ३०६।
५ शास्त्रदीपिका, पृ० ७७।

## १० निर्मन्थ्यशब्दस्य यौगिकताधिकरणम् ।

### तथा निर्मन्थ्ये ॥ १२ ॥

"निर्मन्थ्यशब्दस्यापि शास्त्रप्रयोगात् संस्कारवाचित्वे अव्यभिचाराद्वा जातिनिमित्तत्वमुद्भाव्य प्रसिद्धाऽवयवार्थत्वात्पूर्ववद्यौगिकत्वं साधनीयम्। विशेषस्त्वयं—प्रोक्षणीशब्दो हि सेचनसाधनत्वनिमित्तः। अस्ति चापां प्रोक्षणसाधनत्वं सर्वदेति युक्तं यौगिकत्वम्। निर्मन्थ्यशब्दस्तु मन्थनकर्मत्वनिमित्तः। न च निष्पन्नस्याग्नेर्मन्थनकर्मत्वमस्ति। निष्पन्ने चाग्नावयं शब्दो लोके वेदे च प्रयुज्यते। निर्मन्थ्यमानय पक्ष्यामह इति। निर्मन्थ्येनेष्टकाः पचन्त्वव्यभिचाराज्जातिनिमित्त इति शङ्कां निर्वर्त्तयितुमतिदेशः क्रियते। भूतपूर्वमपि योगं निमित्तीकृत्य सन्तानाभिप्रायेणापि प्रयोगोपपत्तेर्न रूढिः कल्प्या[१]"। तस्माद्योगः प्रयोजनं तु—

"पाकेनाग्नेरुपात्तत्वाद्विशेषणपरा श्रुतिः।
तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यते॥

यथैव लोहितोष्णीषादिविधिषु विशेष्याणां प्राप्तत्वाद्विशेषणपरत्वं एवमिहापि विशेष्यानुवादेन विशेषणभूता निर्मन्थनक्रियैव पाकाङ्गत्वेन विधीयते। अङ्गानाञ्च प्रधानेन एकदेशकालकर्तृत्वं वक्ष्यते। तेनाचिरनिर्मथितेनादूरनिर्मथितेनानन्यकर्तृनिर्मथितेने[२]"-ष्टकाः पक्तव्या इति।

## ११ वैश्वदेवादिशब्दानां नामधेयताधिकरणम्।

### वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

"चातुर्मास्येषु प्रथमे पर्वणि अष्टौ यागाः समाम्नाताः—

१ शास्त्रदीपिका, पृ० ७७।
२ तन्त्रवार्त्तिक, पृ० ३०६-३०७।

'आग्नेयमष्टाकपालं निर्वपति। सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेकादशकपाल'मिति। तत्सन्निधाविदमाम्नायते—'वैश्वदेवेन यजेते'ति। तत्र संशयः। किं यजेतेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः किम्वा तेषामेव नामधेयमिति।

तत्र नामत्वपक्षे स्याद्वाक्यमेतदनर्थकम्।
देवतातो विधेया स्याद्गत्याभावाद्विकल्प्यते॥

नामत्वपक्षे हि तस्याविधेयत्वाद्यागस्यानूद्यत्वेनाविधेयत्वात् समस्तवाक्यानर्थक्यप्रसङ्गः। तस्माद्गुणविधिः।

अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरमनवकाशमिति चेत्—न। विकल्पसम्भवात्। न चाद्यापि सूत्रभाष्यकाराभ्यामुत्पत्तिशिष्टप्राबल्यं कथितं, इति तुल्यबलतां मन्यते। गुणाधिकरणे बलाबलं वक्ष्यते तेन गतार्थमिति चेत्—न। आनर्थक्याच्च। वक्ष्यति हि—श्रुतिलिङ्गाधिकरणे आनर्थक्यप्रतिहतानां बलाबल इति वाक्यस्यानर्थक्यं माभूदिति देवतैव विधेया। सा च गत्यभावादुत्पन्नशिष्टाप्युत्पत्तिशिष्टैरग्न्यादिभिर्विकल्पयिष्यत इति प्राप्तावाचक्ष्महे—तत्त्वनुवादत्वेऽपि समुदायीकरणेनार्थवत्[१]"। एकशब्दोपादाने हि सत्येकप्रतीत्यारूढानामाग्नेयादीनां सामानाधिकरण्यादेकसंज्ञासम्बन्धो लभ्यते। "ततश्च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादौ वैश्वदेवनामकस्याग्नेयादिसमुदायस्य ग्रहणं सिध्यति[२]"। इतरथा त्वामिक्षायागस्यैव ग्रहणं स्यात्। "एवञ्चैकदेशदेवतात्वेन विश्वेषां देवानां समवायात्तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः[३]"।

---

१-३ शास्त्रदीपिका, पृ० ७८-८०।

## १२ वैश्वानरेष्टत्वाद्यर्थवादताधिकरणम् ।

### पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥

"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्युक्ता 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपाल' इत्येवमादिश्रूयते । तत्र विचारः—किमष्टाकपालादिशब्दाः प्रकृत-वैश्वानरयागस्य नामधेयं उत तत्रैव गुणविधिः उत फले गुणविधिः उत अर्थवाद इति । तत्र वैश्वानरसामानाधिकरण्यादष्टत्वादीनां द्वादशसु प्राप्तिः । तत्प्रख्यन्यायेन च नामधेयत्वमाशङ्क्य द्रव्य-वचनत्वात् यागसामानाधिकरण्याभावात् तत्प्रख्यत्वाभावाच्च गुण-विधिः । तथा हि यद्यपि द्वादशस्वष्टौ सन्ति तथापि न द्वादश-कपालेऽष्टाकपालः सम्भवति । यो ह्यष्टसु कपालेषु संस्कृतः पुरो-डाशः सोऽष्टाकपालः । न च पुरोडाशान्तरमस्ति पुरोडाशे । न च द्वादशकपाल एवाष्टसु संस्कृत इति शक्यते वक्तुम् । अष्टभिश्चतुर्भिश्च संस्कृतोऽसौ न केवलैरष्टभिः । ततश्चासामर्थ्यात्तद्धि हितानुपपत्तिः । तस्मात् प्राप्त्यभावान्न तत्प्रख्यत्वम् । अस्तु तर्हि गुणविधिः । अष्टा-कपालद्रव्यं वाष्टत्वसंख्या वा वैश्वानरयागे विधीयते न चोत्पत्ति-शिष्टद्वादशकपालविरोधादविधानम् । सर्वेषामुत्पत्तिशिष्टत्वात् । एकं ह्येदं वाक्यं वैश्वानरमित्यादि यस्मिन् जात इत्यन्तं एकोप-क्रमावसानत्वात् तन्मध्ये च श्रुताष्टत्वादयः सर्वेऽप्युत्पत्तिशिष्टाः ।

यद्वा सर्व एवोत्पन्नशिष्टाः वैश्वानरं द्वादशकपालमिति देवता-विशिष्टयागविधानात् । तत्र तु यदष्टाकपाल इत्यादिवाक्यान्तरै-र्वैकल्पिकद्रव्यविधानम् । उपक्रमे तु द्वादशकपालशब्दो गुणवाक्य-प्राप्तद्रव्योपलक्षणार्थ इति । उच्यते—

उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते ।
सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते ॥

अर्थवादत्वे ह्येकवाक्यत्वं सिद्ध्यति । त्वत्पक्षे तु नानागुणविधानेनार्थभेदाद्वाक्यभेदः । किञ्च निर्वपतिनात्र कर्मविधानं स च द्वितीयान्तेन द्वादशकपालेनैव सम्बध्यते न तु प्रथमान्तैरष्टाकपालादिभिः । ततश्च द्वादशत्वमुत्पत्तिवाक्यगतत्वादितरेभ्यो वाक्यान्तरगतेभ्यो बलवत् स्यात् ।

न चाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत् ।
न द्वादशकपालस्य ह्यविवक्षोपपद्यते ॥

वैश्वानरसामानाधिकरण्याद्द्वितीयान्तं द्वादशकपालपदं निर्वपतिसंयुक्तं नाविवक्षितं तस्मादुत्पत्तिशिष्टं द्वादशकपालत्वम्[1] ” ।

अस्तु तर्हि ब्रह्मवर्चसादिफलार्थत्वेन वैश्वानरयागमाश्रित्याष्टत्वादिगुणविधानकाम्यत्वाच्चोत्पत्तिशिष्टबाधेनापि निवेशः । तथा हि—

पुरुषार्थसमासे तु काम्यं नित्यस्य बाधकम् ।
विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्त्तनात्[2] ॥

एवं प्राप्तेऽभिधीयते—

“ फलार्थेषु गुणेषु स्याद्वाक्यभेदोऽर्थभेदतः ।
उपक्रमोपसंहारसाम्याच्चात्रैकवाक्यता ॥

‘वैश्वानरं द्वादशकपाल’मिति यैवेष्टिरुपक्रान्ता तामेव यस्मिन् जात एतामिष्टिं निर्वपतीत्युपसंक्रियमाणामन्ते पश्यन्तो न तन्मध्ये वाक्यान्तरमुपगन्तुमीश्महे । फलेभ्यस्तु गुणे विधीयमानेऽर्थभेदाद्वाक्यभेदः स्यात् । तस्मादर्थवादत्वम् । अवयवद्वारेणावयविस्तुतिः ।

---

१ शास्त्रदीपिका, पृ० ८१-८२ ।

२ कारिकेयं तन्त्रवार्त्तिके नोपलभ्यते, शास्त्रदीपिकाकारैरपि नोद्धृता ।

यो ह्यवयवोऽष्टासु कपालेषु संस्कृतः सोऽष्टाकपालपुरोडाशसादृश्या-द्गौण्या वृत्त्याष्टाकपाल इत्युच्यते स्तोतुम्[१]"।

## १३ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम्।

### तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः॥ २३-२७॥

'यजमानः प्रस्तरः,' 'यजमान एककपाल' इत्यत्र गुणविधि-र्नामधेयमर्थवादो वेति संशयः।

तत्र प्रस्तरशब्दो यजमानस्य यजमानशब्दो वा प्रस्तरस्य सामानाधिकरण्यान्नामधेयमिति प्राप्ते भिन्नार्थत्वेन प्रसिद्धत्वान्न नाम-धेयमिति निराकार्यं तस्माद्गुणविधिः। तत्रापि यजमानस्य मुख्य-त्वात् 'मुख्यं वा पूर्वचोदनात् लोकव'दिति न्यायेन प्रस्तरलक्षिते तत्कार्य्ये स्रुग्धारणादौ कार्य्ये यजमानो विधीयत इति गुणविधि-रिति प्राप्तम्। तदपि न स्रुग्धारणे विनियुक्तस्य यजमानस्य स्वपदार्थकरणविरोधात्; प्रस्तरवच्च सूक्तवाकेन प्रहरणादेककपाल-वच्च सर्वहुतकरणात् सर्वतन्त्रविलोपः स्यात्। तस्मादर्थवादः। गुणाच्च सामानाधिकरण्यं यजमानशब्दाभिहितो ह्यर्थः स्वसमवेतं स्वकार्यकरत्वं सम्बन्धाद्बोधयति। तच्च प्रस्तरेऽस्तीति तत्प्रकारकः प्रस्तरबोधः।

एवञ्च स्वार्थसदृशे तद्गुणशालिनि तात्पर्यभाक् शब्दो गौण इत्युच्यते, गुणादागतत्वात्; यथा सिंहो देवदत्त इति। आह च—

"अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता[२]"॥ इति

---

१ शास्त्रदीपिका, पृ० ८१-८३।

२ तन्त्रवार्त्तिक, पृ० ३१८।

यत्तु आरोपितार्थवृत्तित्वं गौणत्वमिति तन्न। शाब्दबोधस्य भ्रमत्वापत्तेः वेदे आरोपयितुरभावाच्च। गुणविवक्षया आवश्यकत्वेन सिंहत्वाद्यारोपकल्पने प्रमाणाभावाच्च। कथं तर्हि 'खपुष्प मनसिद्धान्त' इत्यादिप्रयोगेषु खपुष्पादिशब्दानां गौणत्वं इति। उच्यते—खपुष्पशब्दस्य हि आरोपितत्वविशिष्टं पुष्पमर्थः। तद्गुण-आरोपितत्वं तथा च यथा खे पुष्पमारोपितं तथा जगत्कारणे परमाण्वादौ सुखदुःखमोहात्मकमारोपितं तन्निष्ठा अत्यन्ताभावप्रतियोगीति यावत्। आह च—

"परमाणुशरीरादिकारणात्मादितादिभिः।
ततोऽन्यादृक् प्रधानात्मरूपं नास्तीति वर्ण्यते[1]"।

इति तस्माद्यजमानवत् कार्यकारित्वात् प्रस्तरस्य प्रशंसेयम्। प्रस्तरमुत्तरं वर्हिषः सादयतीति विधेः शेषः। एवं यजमान एककपाल इत्यपि एककपालं सर्वहुतं करोतीतिविधेः शेषः।

## १४ आग्नेयादिशब्दानां ब्राह्मणादि-स्तुत्यर्थताधिकरणम्।

### जातिः॥

'अग्निर्वै ब्राह्मण' इत्यादिष्वपि प्राग्वद्गुणविधित्वं च निराकृत्यार्थवादत्वं साधनीयम्। पूर्वत्र परशब्दस्य परत्रप्रवृत्तौ तत्सिद्धिकरत्वं निमित्तमुक्तमिह तु जातिर्जननमिति यावत्। प्रजापतिरकामयतेत्यर्थवादे हि अग्निब्राह्मणौ द्वावपि सृष्टिकाले ब्रह्मणो मुखाज्जातावित्युक्तम्।

अनेन निमित्तेनाग्निशब्दो ब्राह्मणे प्रवर्त्तते स्तोतुम्।

१ तन्त्रवार्त्तिक पृ० ३१८

## १५ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ।

### सारूप्यात् ॥

आदित्यो यूपो यजमानो यूप इति । अत्र सारूप्यं प्रवृत्तिनिमित्तम् । यद्यपि सादृश्यमात्रं सर्वत्रास्ति तथाऽपीह चक्षुर्ग्राह्यं तद्विवक्षितम् । चाक्षुषं हि यूपस्य यजमानसारूप्यमूर्ध्वत्वं, आदित्यसारूप्यमञ्जननिमित्तं तेजस्वित्वम् । तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयते ।

## १६ अपश्वादिशब्दानां गवादिप्रशंसार्थत्वाधिकरणम् ।

### प्रशंसा ॥

'अपशवो वाऽन्ये गो अश्वेभ्यः पशवो गो अश्वाः' इत्यत्र पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधप्रतीतेर्गुणविधित्वेन पूर्वपक्षः ।

सिद्धान्तस्तु—तत्र तत्राजादीनां विहितत्वात् प्रतिषेधोऽनुपपन्नः न च विकल्पो वैषम्यात् कल्प्यो ह्यत्र विधिः । अन्यत्र क्लृप्तस्तस्मादर्थवादः । शब्दप्रवृत्तिनिमित्तं तु प्रशंसा । तथा हि—'अपशव इति नञ्समासगतेन पशुशब्देन गवाश्वगतं प्राशस्त्यमुपादाय पश्चात्तदभावो नञा पश्वन्तरेषु कथ्यते । आह च—

"गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम् ।
तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते[१]" ॥ इति

गवाश्वेषु यत्प्राशस्त्यं न तदन्येष्वस्तीति । सोयं गवाश्वगतप्राशस्त्याभावः पश्वन्तराणामपशूनाञ्च तुल्य इत्यनेन सादृश्येन घटादिवचनस्यापशुशब्दस्याजादिष्वपि प्रयोगः । तस्मादप्रशस्तास्ते गवाश्वमेव प्रशस्तमिति प्रशंसैव फलं यद्यपि न सिद्धादावपि

१ तन्त्रवार्त्तिक, पृ० ३२६ ।

प्रशंसाफलकत्वमविशिष्टं तथापि तत्र प्रशंसा न प्रवृत्तिनिमित्त-मिति शेषः।

## १७ भूमाधिकरणे बाहुल्येन सृष्टिव्यपदेशाधिकरणम्।

## भूमा॥

'सृष्टीरुपदधाती'ति श्रूयते। इह च अ(च?)यनेनार्थगृहीत-मप्युपधानं अध्वर्यकर्तृकत्वसिद्ध्यर्थं विधीयते तदाहुः—

"क्लृप्तवन्त्य[1]पि वक्तव्या पुनरेवंविधा क्रिया।

आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते[2]"॥ इति

किञ्च संहतस्यायनेनापि चयनोपपत्तेर्न नियमत उपधानप्राप्तिः न चैवमपि संहतानामेवोपधानं किन्न स्यादिति वाच्यम्। तस्येष्टकाः प्रत्युपधानतया प्रतिप्रधानमादत्ते। तस्मादुपधानमात्रं विधेयम्। सृष्टीरिति तु लिङ्गप्राप्तमन्त्रानुवादमात्रमिति भाष्यकारः।

केचित्तु मन्त्रोऽपि विधेयः। अविशिष्टसामर्थ्यतया हि ग्रहणा-दावपि प्राप्तः सः।

अपि च—

"प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः।

तदर्थमपि सम्बन्धः कार्यो मन्त्रोपधानयोः"॥

तस्माद्विशिष्टविधिर्गुणविधिर्वेत्याहुः। न चास्मिन् सूत्रे सृष्टीनां विधानमादर्त्तव्यम्। गुणवृत्तिनिमित्तकथनमात्रपरत्वात्। गुणश्चेह भूमा। सृष्ट्यसृष्टिसमुदायेऽप्ये 'कया स्तुवते' इत्यनुवाके सृष्टि[3] (भूमास्तीत्यनेन सादृश्येन सृष्टिशब्दः।)

१ अत्र 'प्राप्तवन्त्यपी'ति वार्त्तिकपाठ।

२ तन्त्रवार्त्तिक, पृ० ३२८।

३ इत पर प्रथमाध्यायग्रन्थ आदर्शे नोपलभ्यते।

# अथ द्वितीयोऽध्यायः

## १ अपूर्वस्याख्यातप्रतिपाद्यत्वाधिकरणम् ।

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥**

सम्बन्धमात्रं प्रतीतम् । न तु करणत्वं कर्मत्वं वा । तदुक्तम्—

"सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते[१]" ॥ इति

तत्र साध्यान्तरसम्बन्धे धात्वर्थस्य योग्यत्वात् करणत्वमेव श्रुतिवशाद्भवति । नामार्थस्य तु वा - - य करणत्वं दुर्वलम् । यागश्च साधननिष्पादितः सन् फल साधयिष्यति । न हि शास्त्रप्रवृत्तेः प्राक् तन्निष्पत्तिः क्वचिदुपपद्यते । तस्माद्धात्वर्थस्य फलभावनाकरणत्वमिति । यस्य च फलसाधनत्वं स धर्म इति । तद्भेदस्य सापवादस्य शब्दान्तरादिभिर्निरूपयिष्यमाणस्योपोद्घातोऽयम् ।

केचित्तु—शास्त्रभेदमेव द्वितीयाध्यायार्थमाहुः । प्रथमे हि शास्त्रप्रामाण्ये निरूपिते तदेव शास्त्रं कुत्र भिन्नं कुत्र नेति जिज्ञासा संभवति । ननु कर्मभेदगोचरेति । तन्न । शास्त्रभेदस्यानुष्ठानानौपयिकत्वेनाचिन्त्यत्वात् । वक्ष्यमाणशेषशेषिभावाद्यनुपयोगाच्च । चोदनाप्रामाण्यबलेन सिद्धस्य चैत्यवन्दनादिव्यावृत्तस्य धर्मस्वरूपस्य कुत्र भेद इति जिज्ञासासम्भवात् । शेषशेषित्वादिविचारोपयोगाच्च भेदस्येति दिक् । तदेवं समानप्रत्ययोपात्तविधिबलात् धात्वर्थस्य फलभावनाकरणमिति स्थितम् ।

१ तन्त्रवार्त्तिक, पृ० ७५६ ।

# अथ भावनानिरूपणम् ।

का पुनर्भावना कश्च विधिः ?

उच्यते—

करोत्यर्थात्मिका उत्पादनापरपर्याया परोत्पत्त्यनुकूलव्यापाररूपा भावना। सा चाख्यातवाच्या। आख्यातार्थस्य करोतिना विवरणात्। उक्तञ्च—

" सिद्धकर्त्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते[१] " ॥ इति

अयं भावः। अभवतो गगनादेरक्रियमाणत्वात् भवतश्च घटादेः क्रियमाणत्वात् भवत्यर्थकर्त्तुः करोति कर्मत्वम्। तथा च करोत्यर्थ-कर्त्तुर्भवितृप्रयोजकतया भवतेः प्रयोजकव्यापारे णिजुत्पद्यमानः करोत्यर्थमवलम्ब्यते। तेन स भावना। आह च—

" करोतिः क्रियमाणेन न कश्चित्कर्मणा विना ।
भवत्यर्थस्य कर्त्ता च करोतेः कर्म जायते ॥
करोत्यर्थस्य यः कर्त्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥
प्रयोज्यकर्त्तृकैकान्तव्यापारप्रतिपादकाः ।
ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥
तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः[२] " ॥ इति

स्यादेतत्। भावना धातुवाच्यैव। भोक्तव्यमित्यादावाख्यातं विनापि तत्प्रतीतेः। तथा च तत्रापि कारकापेक्षा दृश्यते। अस्ति च तत्रापि करोतिसामानाधिकरण्यम्। किं कर्त्तव्यम्।

१-२ तन्त्रवार्त्तिक पृ० ३४२-३४४

# आख्यातार्थनिरूपणम् ।

कस्तर्हीदानीमाख्यातार्थः ? व्यापारस्य धातुनैवाभिहितत्वात् । अपि च ज्योतिष्टोमयाजीत्यादौ धातूपात्तभावनां प्रति ज्योतिष्टोमयागरूपस्यांशान्तरस्य धातूपात्तस्यैव करणत्वे यज इति णिनिः संगच्छते । न चैवं शयीत स्वास्थ्यमित्यादिप्रयोगापत्तिः । शयनस्य भाव्यतयैवान्वयात् । तथैव व्युत्पत्तेः । त्वत्पक्षेऽपि साम्याच्च । एवं च क्रियावाचको धातुरितिव्याकरणस्मृतिर्नान्यथयितव्येति ।

उच्यते—

" प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा ।
प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते ॥
तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ।
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते[1] " ॥

प्राधान्यबलेन तदागमे हि तद्दृश्यत इति न्यायेन च भावनायाः प्रत्ययार्थत्वं निश्चीयत इत्यर्थः ।

यत्तु कृदन्तेष्वपि भावना प्रतीयत इति तत्सत्यम्, किन्तु धात्वर्थैरेव तदाक्षेपः । आह च—

" धात्वर्थकारकैरेव गुणभूतोऽवगम्यते ।
भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते[2] " ॥

" यथैव भावप्रधानत्वादाख्याते तत्सम्बन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न कर्तृकर्मणोरभिधानं एवं कर्त्राद्यभिधानादेव तदन्यथानुपपत्त्या[3] " वा धात्वर्थाव्यभिचाराद्वा भावनालाभः । " तथाभूतयैव च भावनया कारकसम्बन्धोप्युपपद्यते[4] " । एतेन करोति-

१ तन्त्रवार्त्तिक, पृ० ३४८ ।
२-४ तन्त्रवार्त्तिक, पृ० ३५० ।

सामानाधिकरण्यं व्याख्यातम्। न चैवं धातोः सकर्मकाकर्मकत्व-विभागानुपपत्तिः।

"अन्यदेव हि धात्वर्थप्राप्यं कर्मसकर्मके।
अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम्॥

ओदनं पचति ग्रामं गच्छतीति धात्वर्थापवर्गलभ्यमेकं कर्म अपरं पुनर्भावनाकर्म। तत्र कदा चिद्धात्वर्थकर्मैव भावनाकर्मत्वमपि प्रतिपद्यते पाकेन ओदनं भावयतीति। कदा चित् पुनः स्वकर्म-विशिष्टधात्वर्थयुक्ता भावना कर्मान्तरेण युज्यते ग्रामगमनेन स्वार्थं भावयेदिति ओदनपाकेन वेति। तच्च प्रायेण एवं कामशब्देन सम्बध्यते। सुखकाम आसीत् स्वास्थ्यकामः शयीतेति। अत्र हि धात्वोरकर्मकत्वेऽपि प्रत्ययार्थभावनां प्रति कर्मत्वेन स्वादीन्यवधार्यन्ते। आस्ते शेत इत्यादौ तु धात्वर्थ एव कर्मतया संबध्यते। तस्मात्—

साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्।
सकर्मकः स धातुः स्यात् पारम्पर्ये त्वकर्मकः॥

आसनशयनादौ हि आनन्तर्येण नियमेन वा कर्मविशेषो न निरूप्यत इत्यकर्मकत्वम्। पचिगम्यादीनां तु विक्लिद्यत्तत्संयुज्य-मानसाक्षात् सम्बन्धिकर्माव्यभिचारात् सकर्मकत्वं न तु भावना-विशेषणत्वे कश्चिद्विशेषः[1]"। अस्तु वा त्वदुक्तरीत्या फलभावनयोः सामानाधिकरण्यवैयधिकरण्याभ्यां विभागः। एतेन भवति घट-मित्यादि प्रयोगापादानमपि प्रत्युक्तम्। तत्र धात्वर्थसमानाधि-करणस्यैव व्यापारस्य व्युत्पत्तिबलात् प्रतीतेः। ज्योतिष्टोमयाजी-त्यादौ तु धात्वर्थेनैव भावनाक्षेप इति दिक्। तस्मात् प्रत्यय-वाच्यैव भावना। भावनाशब्दोऽप्यदूरविप्रकर्षेण तद्वाचकः।

---

१ तन्त्रवार्त्तिक, पृ० ३५४-३५५।

आह च—

"यादृशी भावनाऽऽख्याते धात्वर्थस्यापि यादृशः ।
नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥ इति

भावनाशब्दो हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीं अभिधत्ते । आख्यातं तु लिङ्गसंख्यारहितरूपेण[1]"। अत एवानन्याख्येयो भावार्थ इति सिद्धान्तः । तदेवं भावना निरूपिता ।

## विधिनिरूपणम् ।

विधिस्तु पुरुषप्रवर्त्तनात्मकः । शब्दनिष्ठप्रेरणाख्यः शब्दभावने[2]-त्युच्यते । अभिधा भावनेति च । सा च लिङादिवाच्या ।

आह च—

"अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते[3]" ॥ इति

तस्या अंशत्रयमुक्तमभियुक्तैः—

लिङोभिधा सैव च शब्दभावना भाव्यं च तस्याः पुरुषप्रवृत्तिः ।
सम्बन्धबोधः करणञ्च तस्यां प्ररोचना चाङ्गतयोपयुज्यते ॥ इति

कथमप्रसिद्धायां तस्यां शक्तिग्रह इति चेत्—उच्यते—

शब्दश्रवणानन्तरं प्रवृत्तिमुपलभ्य तद्धेतुभूतप्रेषणाध्येषणादिव्यापारानुवृत्तप्रवर्त्तनासामान्ये शक्तिग्रहः । अपौरुषेये तु वेदे पुरुषधर्मस्य प्रेषणादेरसम्भवात्तद्व्यतिरिक्तस्य विशेषस्य तर्कितस्य लक्षणमालिङादिर्बोधकः । तदाहुः—

---

१ तन्त्रवार्त्तिक, पृ० ३५२ ।

२ यस्तु शब्दगत प्रयोजकव्यापार यत्र पुरुषप्रवृत्ति साध्यता प्रतिपद्यते सा शब्दभावनेति न्यायमञ्जरीकाराः, पृ० ३४३ ।

३ तन्त्रवार्त्तिक, पृ० ३४४-४५ ।

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानञ्चतुर्णामादितः कृतमिति ॥

कृत्यानां तु प्रैषवाचित्वेऽपि प्राप्तविषयप्रवर्त्तनात्वरूपप्रैषस्य वेदेऽसम्भवात् । प्राप्तविषयत्वाख्यविशेषणत्यागेन लक्षणया विशेषपरत्वमेव । तदाहुः—

" प्रवर्त्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते[1] " ॥ इति

सा च शक्तिशक्तिमतोरभेदात् शब्दात्मिकेत्युच्यते । सा च यद्यपि समानप्रत्ययोपात्ततयाऽर्थभावनयैव सह विशेषणतया सम्बध्यते तथापि दध्ना जुहोतीत्यादौ तात्पर्यतो गुणांशे पर्यवस्यति । श्रेयःसाधनता तु लिङादेः प्रवर्त्तकत्वानुपपत्तिलभ्येत्याचार्याः । सैव लिङादिवाच्येति तु मण्डनप्रभृतयः ।

## २ अपूर्वस्यास्तिताधिकरणम् ।

## चोदना पुनरारम्भः ॥ ५ ॥

अपूर्वं सिद्धं कृत्वा तज्जनकं किमिति चिन्तितम् । अपूर्वमेव तु निष्प्रमाणकमिति पूर्वपक्षः ।

सिद्धान्तस्तु—

" फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रतिगम्यते[2] " ॥

---

१ तन्त्रवार्त्तिक, पृ० ३५१ ।

२ तन्त्रवार्त्तिक, पृ० ३६० ।

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।

योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते ॥

श्रुतार्थापत्तिरेवैका प्रमाणं तस्य चेत् फलमेवोपजायते[१] ।

एषात्र प्रक्रिया । यागेन स्वर्गं कुर्यादिति प्रथमं बोधः । "कथं विनश्वरेण फलं कर्त्तव्यमित्यपेक्षायां अपूर्वं कृत्वेति । कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानेनेति । ततः पूर्वापरकालीनैरङ्गैरुप-कृतस्य यागस्य फलापूर्वसाधनत्वं साक्षान्न सम्भवतीत्युत्पत्त्यपूर्वं कल्प्यते । तत्र सन्निपत्योपकारकाङ्गापूर्वाणि यागस्यैव शक्त्यतिशय-मादधानानि उत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते (तद्द्वारेण फलापूर्वम्) । आरादुपकारकाणि औत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ । दर्शपूर्ण-मासयोस्तु पक्षद्वयवर्त्तिभ्यां समुदायाभ्यां युगपत् फलापूर्वारम्भायोगात् प्रतिसमुदायमेकैकमपूर्वं कल्प्यते । तत्कथं भावापेक्षायामग्न्यन्वा-धानाद्यङ्गोपदेशः । ततः पूर्वोत्तराङ्गसहितेभ्यः साक्षात्तदुत्पत्त्ययोगा-त्प्रतिक्षिकं त्रीणि त्रीण्यपूर्वाणि कल्प्यन्ते[२]" । इति न वा पूर्वपक्षः सिद्धान्तसम्मतः ।

## ३ कर्मणां गुणप्रधानभावविभागाधिकरणम् ।

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

आख्यातभेदादपूर्वभेद इति स्थितम् । तदपवाद - - - - नेद-मधिकरणमारभ्यते । दर्शपूर्णमासयोः श्रूयते—'व्रीहीनवहन्ती'ति । तत्र किमवघातादपूर्वमस्ति उत नेति संशयः । तत्र

१ 'श्रुतार्थापत्तिरेवैका प्रमाणं तस्य वेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेष्वागम एव न" ॥
इति तन्त्रवार्त्तिकपाठ, पृ० ३६६ ।

२ शास्त्रदीपिका, पृ० १०५-१०६ ।

" आख्यातत्वाविशेषेण भूतैर्भव्यार्थजन्मनः ।
सिद्धे च साध्यता शक्तेः सर्वाख्यातप्रधानता[1] " ॥

तस्मात् व्रीह्यपेक्षयावघातः प्रधानम् । ततश्चापूर्वमिति प्राप्ते ब्रूमः—

" नामाख्यातार्थसम्बन्धे यद्क्लृप्तप्रयोजनम् ।
तस्यादृष्टार्थता युक्ता नेतरस्याप्रमाणिका[2] " ॥

स्यादेवं यद्यदृष्टं कल्प्येत । इह तु क्लृप्तमेव व्रीहीणां यागनिर्वृत्तिरूपं प्रयोजनम् । अवघातस्य च व्रीह्यर्थत्वे तुषविमोकादि दृष्टमेव इति नादृष्टं कल्प्यम् ।

यत्तु नियमात् पूर्वं तत् क्रियाकृतं न भवतीति न तया व्यपदिश्यते किन्तु अवघातस्यादृष्टार्थत्वपक्षेऽपि द्रव्यनियमात् कल्प्यमेव तदिति वरम्, दृष्टार्थावघातनियमादेकमेव तत्कल्पितम् । तेन यत्र द्रव्यं प्रति क्रियाणां प्राधान्यं तत्रैवापूर्वभेदः । अस्य विवेकार्थं गुणत्वप्रधानलक्षणं तृतीयासिद्धमेव । सिद्धवत् कृत्यदृष्टार्थलाभालाभावेव परिचायकतया सूत्रकारः[3] ।

## यैस्तु[4] द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

यैः कर्मभिर्द्रव्यं धर्मतः स्वरूपतो वा न संस्कर्तुमिष्यते तानि प्रयाजादीनि स्वसाधन प्रति प्रधानभूतत्वाददृष्टार्थानीत्यर्थः ।

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

यैरवघातादिभिर्द्रव्यं व्रीह्यादि चिकीर्ष्यत इति उत्पाद्यते

१-२ तन्त्रवार्त्तिक, पृ० ३८३ ।
३ अत्र त्रुटिर्दृश्यते ।
४ अन्यत्र 'तु' शब्दप्रयोगो न दृश्यते ।

विक्रियते आप्यन्ते संस्क्रियते वेत्यर्थः। प्रयोजनं तु प्रियङ्गुष्वेपि चरावतिदेशप्राप्तो व्रीहिसाधनकोऽवघातः पूर्वपक्षे। कुतः।

"प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम्।
प्रयाजेज्याज्यवत्तेन हन्तौ स्यात् व्रीह्यबाधनम्॥

सिद्धान्ते तु बाध्यन्ते कुतः।

प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते।
तेन हन्त्यादिभिः सर्वैः संस्कर्त्तव्याः प्रियङ्गवः[1]"॥

## ४ संमार्जनादीनामप्रधानताधिकरणम्।

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्॥९॥

यद्यपि पूर्वाधिकरणे द्रव्यचिकीर्षा गुणकर्मलक्षणतया नोक्ता। उपकारकत्वलक्षणशेषत्वप्रसङ्गात्। तादर्थ्यलक्षणं हि श्रुत्यादिप्रमाणकं शेषत्वम्। न तु प्रत्यक्षाद्युपकारनिमित्तमिति वक्ष्यमाणत्वात् किन्तु—

"अन्यतः सिद्धशेषाणां येषां दृष्टोपकारिता।
तेषां नापूर्वमस्तीति हन्त्यादीनामुदाहृतिः[2]"॥

तथापि तदेव गुणकर्मलक्षणमिति भ्रान्त्या प्रत्यवतिष्ठमानस्य भ्रम-निरासार्थमिदमधिकरणम्। 'स्रुचः संमार्ष्टी'त्यादिषु चिन्त्यते। संमार्गादयः प्रधानकर्म उत गुणकर्मेति। तत्र दृष्टप्रयोजनाभावान्न गुणकर्म न च द्वितीयया स्रुचां साध्यत्वम्। 'सक्तून् जुहोति' इत्यादौ व्यभिचारात्। "अतः स्रुगादिसाधनकसमार्गविधानात् प्रधान-कर्मैवेति प्राप्ते ब्रूमः—

स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते।
कर्त्तुर्यदीप्सितं यच्च तथायुक्तमनीप्सितम्॥

---

१ तन्त्रवार्त्तिक, पृ० ३८४।

२ तन्त्रवार्त्तिक, पृ० ३८६।

तत् कर्म तद्द्वितीयार्थ इत्येवं पाणिनेः स्मृतिः ।

बलीयसी च साचारात् प्रयोगश्चास्ति तादृशः[१] ” ॥

ईप्सितानीप्सितानुवर्त्ति साध्यरूपं कर्म तच्च द्वितीयार्थ इति व्याकरणादवगतम् । समीहितभाव्यापेक्षायां च भावनायां क्रतु-साधनत्वेन समीहिताः स्रुच एव द्वितीयाबलात् साध्यत्वेन सम्बध्यन्ते । सक्तूनां तु भूतभाव्युपयोगाभावेन भाव्यत्वान्वयायोगात् । साधनत्वं द्वितीयया लक्ष्यते । आह च—

“ भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते ।

सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥

प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः ।

विरोधात्तेन सम्बन्धो गुणभावस्तु लक्ष्यते[२] ” ॥ इति

“ प्रयोजनं तु पूर्वपक्षे प्रकृतौ स्रुक्संमार्गस्य बहुसाधनत्वात् कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात् पात्राविवृद्धावपि पशु-चातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे । सिद्धान्ते तु सर्वाः[३] ” प्रतिप्रधानं संस्कारावृत्तेः ।

## ५ स्तोत्रादिप्राधान्याधिकरणम् ।

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभि-धानत्वात् ॥ १३ ॥

स्तोत्रशस्त्राण्युदाहरणम् । “ स्तुतिरेव स्तोत्रम् । शस्त्रमपि सैवा-प्रगीतमन्त्रसाध्या । गुणगुणिसम्बन्धकीर्त्तनं स्तुतिः । सा च गुण-गुणिभ्यां निर्वर्त्त्यते । तत्र गुणानामकर्माङ्गतया निष्प्रयोजनत्वात्[४] ”

---

१ शास्त्रदीपिका, पृ० १०९ ।

२ तन्त्रवार्त्तिक, पृ० ३८९ ।

३-४ तन्त्रवार्त्तिक, पृ० ३९४ ।

स्तुत्यर्थत्वमसंदिग्धम्। स्तुतिस्तु स्तुत्यां देवतां प्रति किं स्मारकत्वेन गुणभूता किं वा देवतां प्रति प्रधानभूता सत्यदृष्टार्था इति संशयः।

तत्र—"देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनम्।

न युक्तं तेन तादर्थ्यात् स्तोत्रादेर्गुणकर्मता[1]"॥ इति

प्राप्ते उच्यते—

"सत्यं दृष्टार्थता युक्ता श्रुतिश्चेन्न विरुध्यते।

देवतास्मरणार्थत्वे स्तुतिरूपं[2] विहन्यते[3]॥

"श्रुतस्य हि प्रयोजनकल्पनम्। स्तुतिश्चेह कर्त्तव्यतया श्रूयते। 'आज्यैः स्तुवते,' 'प्रउगं शंसती'ति। यदा च मन्त्रवाक्यं गुणसम्बन्धाभिधानपरं तदा स्तुतिर्भवति। यदा तु गुणद्वारेण गुणिप्रकाशनार्थं न तदा स्तुतिः। न हि लोके योऽयं वक्रकेशान्तस्तमानयेति परिचायकत्वेन गुणोक्तौ स्तौतीति व्यवहरन्ति। तस्मात् स्तौतिशंसत्योः प्रकाशनलक्षणायां मानाभावात् श्रुतिबलाददृष्टार्थत्वम्। एवञ्च माहेन्द्रग्रहयाज्याभ्याससन्निधावैन्द्री स्तुतिरुपपद्यते[4]"। तथा हि—

यां काञ्चिदप्युपादाय देवता साधिता स्तुतिः।

अदृष्टं यागमात्रार्थं करोत्यारादवस्थितम्॥

लत्पक्षे तु यत्रेन्द्रस्तत्रैन्द्री स्तुतिरुत्कृष्येत। श्रुतिसमवायित्वाद्देवतायाः। यदि तु मनोतास्थाग्निशब्दोऽग्निषोमाविवेन्द्रशब्द एव महेन्द्रं लक्षयेत्[5]तर्हि लक्षणैव दोषः।

---

१ शास्त्रदीपिका, पृ० १११।

२ अत्र 'श्रुतरूप'मिति मुद्रितपुस्तकपाठ।

३-४ शास्त्रदीपिका पृ० १११।

५ अग्नीषोमीयपशौ 'त्वं ह्यग्ने प्रथमो मनोते'ति मनोतामन्त्रे श्रुतोऽग्निशब्दो लक्षणया यथाग्नीषोमौ प्रतिपादयति तथा इन्द्रशब्दोऽपि लक्षणया महेन्द्रं प्रकाशयेदित्यर्थ—मयूखमालिका, पृ० १११।

## ६ मन्त्राविधायकत्वाधिकरणम् ।

## विधिमन्त्रयोरैक्यार्थ्यमैकशब्द्यात् ॥ ३० ॥

द्विविधमाख्यातमुक्तम्—प्रधानकर्मणां विधायकं गुणकर्मणाञ्च । किमेतदेव प्रकारद्वयमुतान्योऽप्यस्तीति प्रसङ्गात् प्रतिपाद्यते ।

तत्र 'देवांश्च याभिर्यजते ददाति चे'त्येवमादीनि यच्छब्दा-मन्त्रणोत्तमपुरुषादिसंयुक्तान्याख्यातानि । 'यस्योभयं हविरार्त्ति-मार्च्छेदि'त्यादीनि च निमित्तादिप्रतिपादनेनाख्यातान्तरैरेकवाक्यतां गतानि उदाहरणम् । तानि च प्रायेण मन्त्रेष्वेवेति मन्त्रोपन्यासः । अविधायका मन्त्रा इति प्रसिद्धिश्च । न तु मन्त्रत्वस्य कश्चित् न्यायोपयोगः । तानि विधायकानि न वेति संशयः । तत्र—

"विधायकत्वमेतेषामाख्यातत्वाविशेषतः ।
सत्यपि प्रकृते कर्मण्यभ्यासात् कर्मभेदधीः[१]" ॥

"प्राप्तत्वाद्यदि चेष्येत मन्त्राणामनुवादता ।
तैरेव विहितं कस्मान्न स्मारयति चोदना[२]" ॥

यत्तु मन्त्रत्वादविधायक इति तन्न । वसन्ताय कपिञ्जलाना-लभत इत्यादौ व्यभिचारात् । तस्मादगृह्यमाणविशेषत्वाद्ब्राह्मण-वन्मन्त्रोपि विधायकः । अभ्यासाच्च कर्मभेद इति प्राप्तेऽभिधीयते—

"यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते ।
न हि याभिर्यजेतेति कथञ्चिद्विधिसम्भवः[३]" ।

तथा दामि गृह्णामीति नात्मनात्मा विधातुं शक्यः । तथा अग्नीदग्नीन् विहरेत्यादावामन्त्रणेन विधिशक्तिलोपः । अभिमुखा-

---

१ शास्त्रदीपिका, पृ० ११२ ।

२ तन्त्रवार्त्तिक, पृ० ४१२ ।

३ शास्त्रदीपिका, पृ० ११२ ।

नभिमुखपुरुषसाधारणत्वाद्विधेः। आमन्त्रणस्य च तद्विरुद्धस्वभावत्वात्। तस्मादेवमादीनां प्रयोगमध्ये पुरुषान्तरेण पुरुषे स्मारयितव्ये सामर्थ्यम्। न तु विधाविति सिद्धमभिधायकत्वम्। आह च—

"अनुष्ठाने पदार्थानामवश्यं भाविनी स्मृतिः।
अनन्यसाधनाऽनन्यकार्यैर्मन्त्रैः प्रसाध्यते[1]"॥

एवञ्च मन्त्रैरेव स्मृत्वा कर्त्तव्यमिति नियमादृष्टमपि कल्प्यम्। यत्र तु मन्त्राभावस्तत्र ब्राह्मणमेव विधायकं स्मारकञ्च। तदुक्तम्—

"विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति।
मन्त्रतस्तु विरोधे स्यादित्यचैतद्वदिष्यते[2]"॥ इति

## ७ मन्त्रनिर्वचनाधिकरणम्॥

## तच्चोदकेषु मन्त्राख्या॥ ३२॥

न्यायानौपयिकेनापि मन्त्रशब्देन पूर्वं व्यवहृतमिति तत्प्रसङ्गात् मन्त्रलक्षणमुच्यते। तत्पूर्वोक्तमभिधानम्। चोदकं प्रयोजकं येषां तेषु मन्त्राख्येति। प्रायिकमिदम्। यत्राभियुक्तानां मन्त्रत्वप्रसिद्धिः स मन्त्र इति विवचितम्। प्रयोजनन्तु—'अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि' इति वेदवाक्यार्थबोधः।

## ८ ब्राह्मणनिर्वचनाधिकरणम्।

## शेषे ब्राह्मणशब्दः॥ ३३॥

मन्त्राद्भिन्नं ब्राह्मणमिति। एतदपि प्रासङ्गिकम्। फलं तु 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वाक्यार्थबोधः।

---

१ तन्त्रवार्त्तिक, पृ० ४१४।

२ तन्त्रवार्त्तिक, पृ० ४१३

## ९ ऊहाद्यमन्त्रताधिकरणम् ।

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३४ ॥**

ऊहप्रवरनामधेयानां मन्त्रत्वमुत नेति संशये मन्त्रैकवाक्यत्वेन तन्मध्ये निवेशात् मन्त्रैर्कार्यकरत्वाच्च मन्त्रत्वमिति प्राप्त उच्यते—

"अभियुक्तप्रसिध्या हि मन्त्रत्वमवकल्पते ।
स्वाध्यायकाले तेषाञ्च समाम्नातेषु मन्त्रधीः[१]" ॥

तस्मादभियुक्तप्रसिद्ध्यभावादमन्त्रत्वम् । मन्त्रैकवाक्यत्वं त्वप्रयोजकम् । मन्त्रकार्यकरत्वं तु रथघोषेण माहेन्द्रं स्तोत्रमुपाकरोतीति विहिते रथघोषे व्यभिचारि । प्रयोजनन्तु ऊह्यमाने सूर्याय इत्यादि पदे भ्रष्टेऽपि मन्त्रभेषनिमित्तप्रायश्चित्तत्वमस्त्येव । यतः—

"आकृतीनामभिव्यक्तिर्या कथं चिन्निरूपिता ।
नासाववयवाधिक्यविनाशेऽपि विनश्यति[२]" ॥

तेन तत्र छान्दसप्रयोगादिकमप्युपपद्यत इति सिद्धम् ।

## १० ऋग्लक्षणाधिकरणम् ।

**तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥**

'अहे बुध्निये'त्यादिपूर्वोदाहृतवाक्यार्थोपयोगी मन्त्राणामवान्तरविभागः ऋगादिरूपः लक्षणेन व्युत्पाद्यते । यत्र ( अर्थवशेन ) पादव्यवस्था सा ऋगिति । व्यवस्था च यद्यपि वृत्तलक्षणाधीना तथापि क्वचिदर्थोऽपि पादेन समाप्यत इति प्रायिकं तत्सूत्रेऽनुदितम् । न तु लक्षणघटकम् ।

१ शास्त्रदीपिका, पृ० ११४ ।

२ तन्त्रवार्त्तिक, पृ० ४१८ । अत्र 'विनाशेप' इति बहुवचनान्त पाठ

## ११ सामलक्षणाधिकरणम् ।

### गीतिषु समाख्या ॥ ३६ ॥

प्रगीतो मन्त्रः सामेति सूत्रार्थः । तत्रापि नागृहीतविशेषण-न्यायेन 'कवतीषु रथन्तरं गायीत'त्यादिदेशोपपत्तेश्च गीतिरेव सामेति सप्तमे वक्ष्यते । इह तु मन्त्रविभागमात्रं विवक्षितमिति न पौनरुक्तम् ।

## १२ यजुर्लक्षणाधिकरणम् ।

### शेषे यजुःशब्दः ॥ ३७ ॥

ऋक्सामाभ्यां भिन्नं मन्त्रजातं यजुरित्यर्थः ।

## १३ निगदानां यजुष्ट्वाधिकरणम् ।

### निगदो वा चतुर्थं स्यात् धर्मविशेषात् ॥ ३८ ॥

शेषे यजुः शब्द इत्यस्याक्षेपेण इदमारभ्यते । अपरसम्बोधन-रूपाः प्रोक्षणीरासादयेत्येवंरूपा मन्त्रा निगदाः । ते किं यजूंष्येव उत भिन्ना इति संशयः ।

व्यपदेशभेदादुपांशु यजुषा उच्चैर्निगदेनेति विरुद्धधर्माध्यासाच्च भिन्ना इति प्राप्त उच्यते—

नितरां गद्यन्त इति व्युत्पत्त्या यजुःष्येव उच्चैस्त्वधर्मयोगान्निगद-व्यपदेशो ब्राह्मणपरिव्राजकवदुपपद्यते । विरुद्धधर्मोऽपि सत्येव यजुष्ट्वे परप्रत्यायनरूपकार्यविरोधेन निगदेषूपांशुत्वाप्राप्तेरर्थवशाच्चोच्चैस्त्वसिद्धेर्न यजुर्भ्यो भेदमावहति । तस्मात् यजुर्लक्षणयोगात् यजूंष्येव निगदाः ।

आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि ।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्त्तते[1] ॥

---

१ पूर्वस्माद्ग्रन्थादसम्बद्धेव कारिका लेखकप्रमादादन्यस्माद्वा हेतोरत्रास्या निवेशो जात ।

## १४ एकवाक्यत्वलक्षणाधिकरणम् ।

### अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥

त्रिधैव मन्त्रा इत्युक्तम् । तत्र ऋक्सामानां भेदो न वक्तव्यः अध्येतृप्रसिद्धत्वात् । यजुषां तु प्रश्लिष्टपठितत्वात् न लक्षणादिना भेदज्ञानमिति परिमाणलक्षणमुच्यते । यावदेकप्रयोजन विभागे च साकाङ्क्षं पदजातं तावद्यागसाधनत्वात् यजुर्वक्तव्यत्वाच्च वाक्यम् ।

अन्यत्तु यजुरन्तरवाक्यान्तरं चेदर्थादुक्तम् । तदुदाहरण तु 'देवस्य त्वा सवितुः प्रसवे'ति । अत्र हि सर्वाणि पदानि निर्वाप-प्रकाशनार्थानि विभागे च साकाङ्क्षाणि । यद्यपि 'भगो वां विभजतु पूषा वां विभजतु' इति सर्वे एकार्थाः विभागप्रकाशकत्वात् । तथापि न साकाङ्क्षा इति भिन्नवाक्यत्वम् । अत एव विभागे विकल्पः । तथा 'स्योनन्ते सदन कृणोमि घृतस्य धारया सुशेवं कल्प-यामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति यद्यपि विभागे साकाङ्क्षं तथापि प्रयोजनभेदान्नैकं वाक्य किन्तु द्वे—तत्र पूर्वं सदनकरणे नियुज्यते परं पुरोडाशप्रतिष्ठापने ।

## १५ वाक्यभेदाधिकरणम् ।

### समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

येषामदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावाद्वाच-निको विनियोगः परस्परनैराकाङ्क्ष्यञ्च स्वरूपतोऽवगम्यते । तत्र किं यदेकं यजुरिति चिन्त्यते—किं प्राक्दृष्टार्थमन्त्रावधेरेकमन्त्रत्वं उत यावदेव मिथःसम्बद्धमिषेत्वेति आयुर्यज्ञेन कल्पतामिति च तावदेकं यजुः । ऊर्जेत्वेति प्राणो यज्ञेन कल्पतामिति यजुरन्तरमिति ।

तत्र—"अदृष्टार्थत्वमेतेषामनुष्ठेयाप्रकाशनात् ।
तच्चैकं तत्र साकाङ्क्षाः सर्वं इत्येकवाक्यता[१]" ॥

अदृष्टं हि लाघवादेकमेव कल्प्यम् । तत्र च संभूयकारित्वात् विभज्यमानाः साकाङ्क्षा एवेत्येकवाक्यता । यद्यपि प्रतीकभेदेनानेकत्र विनियोगः इषेत्वेति शाखां छिनत्ति ऊर्जेत्वेत्यनुमाष्टीति तथापि यावद्विनियोगं सकल आवर्त्तिष्यते । आदिप्रतीकेन मध्यप्रतीकेन च सर्वस्योभयत्र विनियोगादिति प्राप्ते ब्रूमः—

"यद्यप्येषामदृष्टोऽर्थस्तथापि न तदेकता ।
रूपतो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः ॥
अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् ।
यथापेक्षमतस्तेषां भिन्नादृष्टप्रकल्पना[२] ॥
यथा विश्वजिदादीनां भेदेन फलकल्पना ।
यथा च समिदादीनामपूर्वं भिन्नमिष्यते ॥
तद्वदत्र न चात्रैषामदृष्टार्थत्वसम्भवः ।
छेदनादिप्रकाशेन[३] दृष्टार्था हि विधेरमी[४]" ॥

तेन विधिवशादेषां प्रकाशनार्थत्वे स्थिते अगत्या छिनद्मीत्याद्यध्याहार्यम् । तत्रैकेन छेदन प्रकाश्यते अन्येनानुमार्जनमित्यर्थभेदान्मन्त्रभेदः । तथा 'आयुर्यज्ञेन कल्पता'मित्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् 'क्लृप्तीर्वाचयती'ति च बहुक्लृप्तिवचनस्य चोदितत्वात्तत्संपत्त्यर्थमायुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः । एतेन निर्वापवत् विभागवद्वा अभेदो विकल्पश्च प्रत्युक्तः ।

१ शास्त्रदीपिका, पृ० ११७ ।
२ प्रकल्पनमिति पाठान्तरम् ।
३ शाखाच्छेदप्रकाशेनेति पाठान्तरम् ।
४ शास्त्रदीपिका, पृ० ११७ ।

## १६—१७ अनुषङ्गाधिकरणम् ।

## अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा । याते अग्ने रजाशया याते अग्ने हराशया' इति श्रूयते । तत्रोत्तरौ मन्त्रावुदाहरणम् । किमनयोर्लौकिकः शेषोऽध्याहार्यः किम्वा तनूर्वर्षिष्ठेत्याद्यनुषक्तव्यमिति । तत्र—

"एकत्रैव निबद्धो हि समाम्नायेन वैदिकः ।
शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः[१]" ॥

लौकिको हि यत्र शब्दो यत्र कार्यं तत्र नियुज्यमानो न विरुध्यते । वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतु शक्य । यदि तु रचयितव्याल्लौकिकात् रचितत्वेन लघुतरमिति वैदिकमप्यन्यत्र नीयेत तथापि समाम्नाय बहिर्भावात् लौकिकमेव स्यात् । तथा हि—

"तानेव वैदिकान् मन्त्रान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुध्या प्रयुञ्जते[२]" ॥

तस्माद्वैदिकः शेष इति प्राप्तेऽभिदध्महे—

"विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।
तद्व्यापारविमोकश्च सकलान्वेषणक्षये[३]" ॥

तत्र—"अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते यतः[४] ।
पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदान्तरे ॥

१ शास्त्रदीपिका, पृ० ११८ ।
२-३ तन्त्रवार्त्तिक, पृ० ४३६ ।
४ वार्त्तिके अत्र पुन'रिति पाठ ।

स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः ।
वाक्यान्तरेऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे ॥

सर्वत्र च—

सन्निकृष्टो न लभ्यश्चेत् विप्रकृष्टोपि वैदिकः ।
स एवावैदिकस्तु स्यात् प्राप्तः सन्निहितो यदा ॥

तदिह रजाशयाहराशयावाक्ययोः शेषः स्वपदस्ववाक्ययो-रल[1]"ब्धत्वाद्वाक्यान्तरेऽन्विष्यते । ततश्च—

"यथापेक्षितरूपो हि वाक्यशेषे समर्थिते ।
वेदेन लौकिकः शेषो न मृग्यो निष्प्रमाणकः[2]" ॥

सर्वार्थोऽप्ययं "सकृदाम्नायमानः सर्वेषामीप्सिते देशे नाम्नातुं शक्यत इति एकस्य यथाक्रममाम्नातः । इतराभ्यां अप्याकांक्षितः पूर्वत्र परस्ताद्भावितया दृष्टसामर्थ्यः परस्तादेव निवेक्ष्यते । आह च—

प्रतीतिमात्रलाभार्थं तत्प्रदेशे स पठ्यते ।
योग्यत्वात् सन्निवेशस्तु पूर्वमन्त्रवदिष्यते[3]" ॥

'चित्पतिस्त्वा पुनातु । वाक्पतिस्त्वा पुनातु । देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभि'रिति श्रूयते ।

तत्राच्छिद्रेणेत्यादिः शेषः किं पूर्वयोरनुषज्यते उत नेति संशयः ।

तत्र—

"अनन्तरेण सम्बध्य शेषस्येष्टा कृतार्थता ।
शेषिणश्च निराकाङ्क्षाः किं निमित्तोऽनुषङ्गधीः[4]" ॥

१ तन्त्रवार्त्तिक, पृ० ४३६-४३७ ।
२ शास्त्रदीपिका, पृ० ११९ ।
३ तन्त्रवार्त्तिक, पृ० ४३७ ।
४ तन्त्रवार्त्तिक, पृ० ४४० ।

इति प्राप्ते ब्रूमः—

"अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम् ।
तत एवं भवेदेष व्याख्यातार्थेन सर्वभाक्[१]" ॥

"पुनातु शब्दैकवाक्यतामुपगतो ह्ययमच्छिद्रादिः करणद्वारेण यजमानपावनक्रियाप्रकाशनार्थः । सैव च क्रिया पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यते । तदर्थश्च वाक्यशेषः प्रधानवशात्तत्राकृष्यत इत्यनुषङ्गसिद्धिः[२]" ।

## १८ व्यवेताननुषङ्गाधिकरणम् ।

## व्यवायान्नानुषज्येत ॥ ४९ ॥

"प्रत्युदाहरणत्वेन सन्निधेरेवमुच्यते ।
असम्बन्धतिरोधाने वैषम्यान्नानुषज्यते[३]" ॥

'सं ते वायुर्वातेन गच्छतां सयजत्रैरङ्गानि संयज्ञपतिराशिषे'त्यत्र गच्छतामितिशब्दः संयजत्रैरित्यनेन बहुवचनान्तेन त्वयोग्यत्वान्न सम्बध्यते । अतो बुद्धिविपरिवृत्तिभङ्गाद्यज्ञपतिना सह योग्यत्वेऽपि नानुषज्यते । अतो वैदिकशेषासम्भवात् गच्छन्तां गच्छतामिति चाध्याहारः ।

अनुसन्धानमात्रमिति केचित् । "प्रयोजनन्तु अनुषङ्गे मन्त्रत्वात् प्रायश्चित्तम् । लौकिकत्वे मन्त्रत्व इति । आह च—

"आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् ।
ऊहादिसाम्ये ननु लौकिकानाममन्त्ररूपप्रतिपत्तिसिद्धिः[४]" ॥ इति

इति मीमांसाशास्त्रसर्वस्वे द्वितीयाध्यायस्य प्रथमः पादः ॥

१ तन्त्रवार्त्तिक, पृ० ४४० ।
२ शास्त्रदीपिका, पृ० १२१ ।
३-४ तन्त्रवार्त्तिक, पृ० ४४२ ।

## द्वितीयाध्याये द्वितीयः पादः।



### १ अङ्गापूर्वभेदाधिकरणम्।

#### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्॥ १॥

"उपोद्घातप्रसक्तानुप्रसक्तादौ गतेऽधुना।
शब्दान्तरादिभिर्भेदालक्षणार्थोऽभिधीयते[१]"॥

तत्र शब्दान्तरसहकृतोत्पत्तिविधिप्रमाणको भेदस्तावन्निरूप्यते। ज्योतिष्टोमे श्रूयते। 'सोमेन यजेत। दाक्षिणानि जुहोति। हिरण्यमात्रेयाय ददाति। स्तृणाति स्तौति शंसती'त्यादि। तत्र किं स्वर्गकामो यजेतेत्यनेन वाक्येन विहितायां भावनायां अवच्छेदकत्वेन सर्वे धात्वर्था विधीयते उत प्रतिधात्वर्थं भावनाभेद इति संशयः।

तत्र—

"भिन्नासु भावनासु स्यादनेकापूर्वकल्पनम्।
एकक्लृप्त्युपपत्तेऽर्थे नानेकं तत्र कल्प्यते॥

किञ्च—

भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते।
गुणभूता हि धात्वर्था न तां भिन्द्युः कथञ्चन[२]"।

फलापवर्गित्वान्न क्रियाणां फलभेदं विना भेदायोगात्। न भावना भेदवादिपक्षे भाव्यमपूर्वमाभिद्यते तथा च गौरवम्। यदि च धात्वर्थान् प्रति गुणभूता भावना स्यान्न (?) तदा तान्

१ तन्त्रवार्त्तिक, पृ० ४४२।
२ शास्त्रदीपिका, पृ० १२१।

प्रत्युपादीयमाना भिद्येतापि। न त्वेतदस्ति। आकाङ्क्षा तस्य क्रिया-प्रधानत्वात् अतः संहत्यैव धात्वर्थास्तां विशिंषन्ति। प्रातिपदिकार्था इव सुबर्थां आरुणिमादय इव क्रयमित्येवं प्राप्तेऽभिधीयते—

प्रकृतिप्रत्यययोः पौर्वापर्यनियमात्। तत्तत्प्रकृतिपरप्रत्ययेन निरपेक्षतत्तत्प्रकृत्यर्थानुरक्तभावनाप्रतीतेरवच्छेदकान्तरस्याकाङ्क्षाभावेन धात्वर्थान्तरविधानायोगात् धात्वर्थभेदेन भावनाभेद इति। तथा च पर्यायभूतधातुरूपशब्दान्तरबलेन सर्वेषामज्ञानतत्तद्धात्वर्थावच्छिन्न-भावनारूपकर्मज्ञापकत्वादूपोत्पत्तिविधित्वावगमात् कर्मैक्ये च तद-नुपपत्तेः। शब्दान्तरस्योत्पत्तिविधित्वज्ञापनेन कर्मभेदोपयोगः।

उक्तञ्च—

"धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम्।
उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते[1]"॥

दृष्टान्तस्तु विषमः तथा हि—

"निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
ततः सर्वविशिष्टा स्याद्द्वन्द्वोत्पन्नसुबर्थवत्॥
यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः।
श्रूयेत क्रयवत् सर्वैर्विशिष्येत स धातुभिः[2]"॥

अग्नीषोमादिर्हि पदश्रुत्या सुबर्थेन सम्बध्यते। प्रारुण्यादिस्तु क्रयेण सह वाक्यांशत्रय (?) एकेन प्रमाणेन युगपत्सम्बन्धः। इह तु श्रुत्या यागसम्बद्धायां भावनायां यागहोमौ वाक्यप्रकरणाभ्यां निविशेयाताम्। ते च श्रुतितो दुर्बले न तु ददातीति पदेऽपि भावना श्रवणात् श्रुतिरेवेति चेत्—न। यागानुरक्तैवेयमित्यत्र श्रुति-

---

१ तन्त्रवार्त्तिक, पृ० ४४६-४४७।

२ शास्त्रदीपिका, पृ० १२२।

व्यापारविरहात् करणांशोपनिपाताच्चास्ति विरोधः। समुच्चये च नैरपेक्ष्यबाधः। तस्मात् धात्वर्थभेदात् भावनाभेद इति सिद्धम्।

## २ समिदाद्यपूर्वभेदाधिकरणम्।

**एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात्॥ २॥**

'समिधो यजति,' 'तनूनपातं यजति,' 'इडो यजति,' 'बर्हिर्यजति,' 'स्वाहाकारं यजती'ति श्रूयते। तत्र किमेकं कर्म उत पञ्चेति संशयः।

एकमिति प्राप्तम्। तथा हि—

"प्रत्ययार्थः समानोपि धातुभेदेन भिद्यते।
धातोरपि समानत्वे केन भेदोऽवधार्यताम्[1]"॥

न चैवमेकेनैव विधाने वाक्यान्तरानर्थक्यात्। तत्त्वमसीति नवकृत्वोऽभ्यासवत्तात्पर्यग्रहार्थत्वात्। तनूनपादादिदेवताविधानार्थत्वाद्वा। शाखान्तरीयाग्निहोत्रविधिवदेकस्यैव कर्मणः कदाचित् केन विधिसम्भवाद्वा। एवं प्राप्ते ब्रूमः—

सर्वत्र हि आख्यातप्रत्ययस्य कर्मविधायकत्वमौत्सर्गिकम्। विधेयान्तरोपादाने तु गौरवभिया तदनुवादाकाङ्क्षा। तस्याञ्च सत्यां पूर्वकर्मप्रत्यभिज्ञा तां शमयति। यदा तु न पदान्तरोपात्तं विधेयं तदा कर्मप्रत्यभिज्ञानस्य नानुवादकारणत्वम्। न च प्रकृते विधेयान्तरोपादानमस्ति। समिदादिदेवतानां मन्त्रादेव प्राप्तेः। अत एव तत्प्रख्यन्यायेन समिदादि नामधेयम्। द्वितीयायां तस्य देवताविधायकतायाः सति गत्यन्तरे कल्पनायोगाच्च। समित्पदस्यापि देवताविधायकत्वे तदवरुद्धे कर्मणि देवतान्तरविधानायोगाच्च।

---

१ तन्त्रवार्त्तिक, पृ० ४५१।

तस्मादनन्यपरिधाय (?) पुनः श्रवणरूपाभ्यासेन कर्मोत्पत्तिविधित्वावगमात् । अभ्याससहायेन विधिना कर्मभेदः । तदुक्तम्—

"आख्यातप्रत्ययः पूर्वं विधत्ते कर्मशक्तितः ।
अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदितम्[१]" ॥

इति । न च बलीयस्याप्रत्यभिज्ञयैक्यम् । यतः—

"श्रुतेः कर्मान्तरज्ञान सन्निधेरेककर्मधीः ।
तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता[२]" ॥

न चात्र यजिश्रुत्यैवैकतापि बुद्ध्या रूढेतिवाच्यम् । यतः

"यागोयमिति विज्ञानं यजिश्रुत्योपजन्यते ।
स एवेत्यन्य एवेति व्यापारोऽस्या न विद्यते[३]" ॥

न तु सर्वत्र नामपदं गुणविधिपरं नामधेयं वा । तथा च—
संज्ञागुणान्यन्तरेण एव भेदसिद्धेः । क्वाभ्यासो भेद एकः ।
तथा हि—

"गुणो वा नामधेयं वा समिदादिपदं भवेत् ।
ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति[४]" ॥

किञ्च—"प्रयुज्यते हि वेदेषु नाख्यातं केवलं क्वचित् ।
नाम किञ्चित् प्रयुक्तं चेत् तत्र चोक्तं गतिद्वयम्[१]" ॥

उच्यते—

नामार्थनिर्णयस्याख्यातनिर्णयाधीनत्वेन तदर्थविचारात् प्राक् भेदाभेदयोरुदासीनमेव । नाम्नः आख्यातार्थे हि विधेये ज्ञाने तत एव भेदसिद्धिः । अनुवाद्ये तु नैव भेद इति । न चैवं संज्ञागुणयोः क्वापि भेदकत्वं न स्यादिति वाच्यम् । आख्यातव्यापाराभाव एव

१-३ तन्त्रवार्त्तिक, पृ० ४५३, ४५४, ४५५ ।
४ तन्त्रवार्त्तिक, पृ० ४५० ।

तयोर्भेदकत्वात् । यथा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्, अथैष ज्योतिरिति । कल्पस्याख्यातस्य कल्पकपारतन्त्र्यात् । ज्योतिरादौ च एतेन सहस्रदक्षिणेन यजेतेत्यस्य गुणान्वयव्यापृतत्वात् । एतेन ऋद्धिकामो यजेतेत्यस्य फलान्वयव्यापृतत्वात् । प्रकृते त्वनन्यपरोधिरिति विशेष' ।

उक्तञ्च—

"प्रायेणाख्यातसम्बन्धि नामेष्टं पारतन्त्र्यभाक् ।
तस्यैव प्रथमं तेन भेदाभेदनिमित्तता[1]" ॥ इति

## ३ आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ।

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

अभ्यासस्यापवादोऽयम् । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन् ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदैन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावस्याया'मिति कालसम्बन्धानि श्रूयन्ते। तथा 'समिधो यजति' 'आज्यभागौ यजती'त्यादीनि अकालसंयुक्तानि । तेषां सन्निधौ 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजत' इति वाक्यद्वयं श्रूयते । तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलं श्रुतम् ।

*(To be continued)*

१ तन्त्रवार्त्तिक, पृ० ४५०